## टिप्पणी- ५१

१. पाणिनि ने "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्, कृत्तद्धितसमासाश्च" (अ० १/२/४५, ४६) इन दो सूत्रों द्वारा धातु-प्रत्ययवर्जित अर्थवान् जिन शब्दों की प्रातिपदिक संज्ञा की है, शर्ववर्मा ने उनके लिये 'लिङ्ग' इस संज्ञाशब्द का व्यवहार किया है । इन दोनों में यद्यपि प्रातिपदिक संज्ञा अधिक प्रसिद्ध है, तथापि लिङ्गसंज्ञा भी पूर्वाचार्यों द्वारा प्रयुक्त हुई है । इस प्रकार दोनों में से किसी का भी गौरव या लाघव यद्यपि सिद्ध नहीं किया जा सकता, तथापि आकार की दृष्टि से लिङ्गसंज्ञा अवश्य ही लघु है, जबकि प्रातिपदिक एक महती संज्ञा है।

कैयट आदि व्याख्याकारों के मतानुसार एक या दो अक्षरों वाली ही संज्ञा की जानी चाहिए, क्योंकि लोकव्यवहारसम्पादन का लघु उपाय एकमात्र शब्दव्यवहार ही है, उसमें भी संज्ञा-व्यवहार तो और भी अधिक लाघवाधायक होता है । अतः संज्ञा को अत्यन्त लघु (एक या दो अक्षरों वाली) ही होना चाहिये ।

२. व्याख्याकारों ने महती संज्ञा का एक प्रयोजन माना है-उसका अन्वर्थ होना। अन्वर्थसंज्ञा वह होती है, जिसका कोई लोकप्रचलित यौगिक अर्थ होने के साथ शास्त्र में उसका अर्थविशेष में नियमन किया गया हो-'सर्वार्थाभिधानयोग्यशब्दस्य शक्तिनियमनमात्रं सञ्ज्ञाकरणम्, सर्वार्थाभिधानशक्तियुक्तः शब्दो यदा विशिष्टार्थे संव्यवहाराय नियम्यते तदा तत्रैव प्रतीतिं जनयति' (म०भा०प्र० १/१/२७, २०)। इस दृष्टि से 'पदं पदं प्रति प्रतिपदम्, तत्र भवम्' इस अर्थ के अभिप्रेत होने से यदि प्रातिपदिक संज्ञा को अन्वर्थ माना जाता है, तो 'लिङ्ग्यते चित्र्यतेऽनेनैकदेशेनार्थो गम्यते' इस अर्थ की सङ्गति से 'लिङ्ग' संज्ञा को भी अन्वर्थ सिद्ध किया जा सकता है।

३. शब्दशक्तिप्रकाशिकाकार के अनुसार नाम और प्रातिपदिक में कोई भेद नहीं होता-'यत् प्रातिपदिकं प्रोक्तं तन्नाम्नो नातिरिच्यते' (कारिका १४), तथापि पूर्वाचार्यों ने नाम संज्ञा का अधिकांश व्यवहार सुबन्त पद के लिये किया है । जैसे—

**काशकृत्स्नधातुव्याख्यान**-लिङ्गे किमि चिति विभक्तावेतन्नाम (सू० २)। (लिङ्गम्=प्रातिपदिकम्, किम्=स्त्रीत्वादिकम्, चित्=संख्या, विभक्तिः=कर्मादिकारकम्, एष्वर्थेषु यच्छब्दरूपं वर्तते तन्नाम इत्युच्यते–व्याख्या) । इस व्याख्या से स्पष्ट है कि पूर्वाचार्य प्रातिपदिक के अर्थ में लिङ्गसंज्ञा का भी व्यवहार करते थे ।

**गोपथब्राह्मण**- किं नामाख्यातम् (१/१/२४)।

**बृहद्देवता**- **अष्टौ यत्र प्रयुज्यन्ते नानार्थेषु विभक्तयः।**
**तन्नाम कवयः प्राहुर्भेदे वचनलिङ्गयोः।।** (१२/१८)।

**वाजसनेयिप्रातिशाख्य**- नाम वायव्यमिष्यते (८/५२)।

**अथर्ववेदप्रातिशाख्य**- आख्यातानि नामसदृशानि (१/३/३)।

**नाट्यशास्त्र**- **नामाख्याततनिपातैरुपसर्गसमासतद्धितैर्युक्तः ।**
**सन्धिविभक्तिषु युक्तो विज्ञेयो वाचकाभिनयः।।**
(१४/४)।

अर्वाचीन आचार्यों ने 'लिङ्ग' संज्ञा के अर्थ में 'प्रातिपदिक-नाम-मृत्-लि' शब्दों का प्रयोग किया है।

**अग्निपुराण**- धातुप्रत्ययहीनं यत् स्यात् प्रातिपदिकं तु तत् (३५०/२३)।

**नारदपुराण**- अर्थवत् प्रातिपदिकं धातुप्रत्ययवर्जितम् (५२/३)।

**जैनेन्द्रव्याकरण**- अधु मृत् (१/१/५)।

**हैमशब्दानुशासन**- अधातुविभक्तिवाक्यमर्थवन्नाम (१/१/२७)।

**मुग्धबोधव्याकरण**- क्त्यन्तान्यौ दली (सू० १४)।

४. लिङ्गसंज्ञा में धातुओं का वर्जन यदि न किया जाता तो 'अहन्' इत्यादि में धातुओं की भी लिङ्गसंज्ञा हो जाने से नलोप आदि कार्य प्रवृत्त हो जाते– *"लिङ्गान्तनकारस्य"* (२/३/५६) । विभक्ति का परित्याग किये जाने से 'वृक्षान्' की भी लिङ्गसंज्ञा और उसके फलस्वरूप नलोप नहीं होता है।

'अर्थवत्' पाठ होने से वृक्षशब्दगत 'व् - ऋ - क् - ष् - अ' में से किसी भी वर्ण की स्वतन्त्ररूप में लिङ्गसंज्ञा प्रवृत्त नहीं होती है । 'अर्थ' शब्द की व्याख्या करते हुये व्याख्याकारों ने चार अर्थ बताये हैं—'अभिधेय, निवृत्ति, प्रयोजन तथा धन' । तथापि यहाँ अभिधेयपरक ही 'अर्थ' शब्द का पाठ किया गया है, क्योंकि अभिधेय में निवृत्ति आदि अर्थों का भी अन्तर्भाव हो जाता है । अर्थ के साथ शब्द का औत्पत्तिक संबन्ध है । शब्द को 'जाति-द्रव्य-गुण-क्रिया' के भेद से चार प्रकार का स्वीकार किया गया है ।

व्याख्याकारों ने 'जातिरेव शब्दार्थः, द्रव्यमेव शब्दार्थः, उभयमेव शब्दार्थः' इन तीन पक्षों की विस्तृत व्याख्या प्रस्तुत की है । वर्णों की अर्थवत्ता आदि पर भी विचार किया गया है ।

टीकाकार दुर्गसिंह ने शब्द के चार भेदों को 'जाति-द्रव्य-गुण-क्रिया' के क्रम से प्रस्तुत किया है, परन्तु उदाहरण 'जाति-क्रिया-गुण-द्रव्य' के क्रम से दिये हैं । इस व्यतिक्रम का समाधान करते हुये कलापचन्द्रकार सुषेण विद्याभूषण ने कहा है कि आचार्य दण्डी 'जाति-क्रिया-गुण-द्रव्य' के ही क्रम को स्वाभाविक मानते हैं, उन्हीं के अनुसार दुर्गसिंह ने भी उदाहरणों का क्रम रखा है—

**जाति-क्रिया-गुण-द्रव्यैः स्वभावाख्यानमीदृशम् ।**
**दण्डिनो मतमाश्रित्य दुर्गेणापीत्युदाहृतम् ।।**

कलापचन्द्रकार ने प्रसङ्गतः 'हेमकर-गोपीनाथ' आदि आचार्यों के भी मतों का उल्लेख किया है ।

सङ्गीतशास्त्र में मात्राहीन स्वरों की 'नाम' संज्ञा करके व्याकरणशास्त्रीय मान्यता से सादृश्य दिखाया गया है ।

## ५१. कलापे विभक्तिसंज्ञा

**तस्मात् परा विभक्तयः** (२/१/२) ।

*(दुर्गवृत्तिः)*

**तस्माल्लिङ्गात् पराः स्यादयो विभक्तयो भवन्ति । यथा–**

| | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|---|
| **प्रथमा** | सि | औ | जस् |
| **द्वितीया** | अम् | औ | शस् |
| **तृतीया** | टा | भ्याम् | भिस् |
| **चतुर्थी** | ङे | भ्याम् | भ्यस् |
| **पञ्चमी** | ङसि | भ्याम् | भ्यस् |
| **षष्ठी** | ङस् | ओस् | आम् |
| **सप्तमी** | ङि | ओस् | सुप् |

दृशत् - दृशद्, दृशदौ, दृशदः [ **पाठा०** - दृषदा, दृषद्भ्याम्, दृषद्भिरित्यादि । ---- खट्वा, खट्वे, खट्वाः] कुमारी, कुमार्यौ, कुमार्यः । अर्थस्य विभञ्जनाद् **विभक्तय** इति ] ।

## [ हिन्दी-अनुवाद ] कलापव्याकरण में विभक्तिसंज्ञा

लिङ्गसंज्ञक शब्दों से होने वाले 'सि' आदि प्रत्ययों की विभक्तिसंज्ञा होती है। जैसे—

प्रथमा एकवचन – सि, द्विवचन - औ, बहुवचन - जस् ।
द्वितीया एकवचन – अम्, द्विवचन - औ, बहुवचन - शस् ।
तृतीया एकवचन – टा, द्विवचन - भ्याम्, बहुवचन - भिस् ।
चतुर्थी एकवचन – ङे, द्विवचन - भ्याम्, बहुवचन - भ्यस् ।
पञ्चमी एकवचन – ङसि, द्विवचन - भ्याम्, बहुवचन - भ्यस् ।
षष्ठी एकवचन – ङस्, द्विवचन - ओस्, बहुवचन - आम् ।

सप्तमी एकवचन – ङि, द्विवचन - ओस्, बहुवचन-सुप् ।

जैसे—दृशत् - दृशद्, दृशदौ, दृशदः । कुमारी, कुमार्यौ, कुमार्यः इत्यादि । अर्थ का विभाग करने के कारण 'सि' आदि को विभक्ति कहते हैं ।

## ५१. गान्धर्वे विभक्तिसञ्ज्ञा

**स्वरोपरिस्थिता विभक्तयः (२/१/२) ।**

स्वरोपरिस्थिताः एकादयस्तारकान्ता मात्रासमूहाः सप्त विभक्तयो भवन्ति । यथा–

| | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|---|
| **एकमात्रा** | I | II | III |
| **द्विमात्रा** | II | II II | II II II |
| **त्रिमात्रा** | III | III III | III III III |
| **अर्द्धमात्रा** | ँ | ँ ँ | ँ ँ ँ |
| **पादमात्रा** | × | × × | × × × |
| **पादार्धमात्रा** | ◯ | ◯◯ | ◯◯◯ |
| **पादपादमात्रा** | * | * * | * * * |
| | I II III | I I III | ँ × ◯ * |
| | स स स | स ऋ स | स ऋ ग स |

इत्यादि यथाक्रममन्येषु स्वरेष्वेवं ज्ञेयमिति । स्वरस्य विभञ्जनाद् विभक्तय इति । तथा च गीतनिर्णये भरतः—

ँ अर्धेन्दुरर्धमात्रा ।

◯ पादार्धज्ञापको यवः ।

Y तृतीयांशं त्रिशूलम् ।

Δ त्रिकोणं कोमलवाचकम् ।

< दक्षावर्तकोणं विक्षेपबोधकम् ।

> तद्विपरीतं तु प्रक्षेपज्ञापकम् ।

~ हिल्लोलाकृतिर्मूर्छना ।

× वज्राकृतिः पादमात्रा ।

* पादपादप्रकाशकस्तारकः ।

↑ द्वित्र्यंशबोधको बाणः ।

⚑ पताका तीव्रबोधिका इत्यादि ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में विभक्तिसञ्ज्ञा

स्वरों के ऊपर एक खड़ी रेखा से लेकर तारक चिह्न-पर्यन्त सात मात्रासमूहों की विभक्ति संज्ञा होती है । जैसे—

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| **एकमात्रा** | I | II | III |
| **द्विमात्रा** | II | II II | II II II |
| **त्रिमात्रा** | III | III III | III III III |
| **अर्द्धमात्रा** | ˘̇— | ˘̇- ˘̇- | ˘̇- ˘̇- ˘̇- |
| **पादमात्रा** | × | × × | × × × |
| **पादार्धमात्रा** | ⌓ | ⌓⌓ | ⌓⌓⌓ |
| **पादपादमात्रा** | * | * * | * * * |
| | I II III | I I III | ˘̇ × ⌓ * |
| | स स स | स ऋ स | स ऋ ग स |

इसी प्रकार से अन्य स्वरों में भी क्रमशः उक्त विभक्तियों की योजना करनी चाहिये । स्वरों का विभाग करने से इन्हें विभक्ति कहते हैं । जैसे कि भरत मुनि ने गीतनिर्णय के प्रसङ्ग में कहा है—

˘̇— अर्धमात्रा का बोधक चिह्न बिन्दुयुक्त अर्धचन्द्र ।
⌓ मात्रा के आठवें भाग का बोधक चिह्न यव ।
Ψ मात्रा के तृतीयांश का बोधक चिह्न त्रिशूल ।
▲ त्रिकोण चिह्न कोमलता का वाचक होता है ।
< दाहिने ओर को मुड़ा हुआ कोण-चिह्न विक्षेपबोधक ।
> उससे विपरीत चिह्न प्रक्षेप का ज्ञापक होता है ।
∽ झूले की आकृति मूर्छना को सूचित करती है ।
× मात्रा के चतुर्थ भाग का बोधक वज्राकृति का चिह्न ।
* मात्रा के १६वें भाग का बोधक चिह्न तारक ।
↑ मात्रा के द्वितीय-तृतीय अंश का बोधक चिह्न बाण ।
⚑ पताकाचिह्न स्वर की तीव्रता का बोध कराती है ।

## टिप्पणी-५२

पूर्वाचार्यों ने तथा पाणिनि दोनों ने विभक्तिसंज्ञा की परिभाषा की है । पाणिनि के अनुसार सुप् तथा तिङ् प्रत्ययों में तीन-तीन प्रत्ययों के समुदाय की विभक्तिसंज्ञा

होती है–"विभक्तिश्च, प्राग् दिशो विभक्तिः" (पा० १/४/१०४; ५/३/१) । नाट्यशास्त्र के अनुसार विभक्ति उसे कहते हैं, जो धातु, लिङ्ग तथा पद के संख्या-कर्मादि अर्थों का विभाजन करती है–

**एकस्य बहूनां वा धातोर्लिङ्गस्य पदानां वा ।**
**विभजन्त्यर्थं यस्माद् विभक्तयस्तेन ताः प्रोक्ताः ।।**

(नाट्यशास्त्र १४/३०) ।

कातन्त्रकार ने अन्वर्थ मानकर विभक्तिसंज्ञा के लिये सूत्र नहीं बनाया है । प्राचीन ग्रन्थों में 'विभक्ति' संज्ञा का प्रयोग–

**गोपथब्राह्मण**– ओङ्कारं पृच्छामः । को धातुः, किं प्रातिपदिकम्, किं वचनम्, का विभक्तिः ? (१/१/२४, २६) ।

**बृहद्देवता**- सङ्ख्याविभक्त्यव्ययलिङ्गयुक्तः (१/४५, २/९४, १०१) ।

**ऋक्तन्त्र**- विभक्तिलोपश्च (३/१/६) ।

**निरुक्त**- विशयवत्यो हि वृत्तयो भवन्ति, यथार्थं विभक्तीः संनमयेत् (२/१;७/१)।

अर्वाचीन ग्रन्थों में विभक्ति का प्रयोग—

**जैनेन्द्रव्याकरण**-विभक्ती, ते विभक्तयः (१/२/१५७; ४/१/९१) ।

**शाकटायनव्याकरण**- त्रयी त्रयी विभक्तीः (१/३/१८१) ।

**हैमव्याकरण**-स्त्यादिर्विभक्तिः (१/१/१९) ।

**मुग्धबोधव्याकरण**-सित्यादिः क्तिः (सू० १२) ।

**शब्दशक्तिप्रकाशिका**- **सङ्ख्यात्वव्याप्यसामान्यैः शक्तिमान् प्रत्ययस्तु यः ।**
**सा विभक्तिर्द्विधा प्रोक्ता सुप्-तिङ् चेति विभेदतः ।।**
**धातु - भेदानुपादाय तदर्थे कर्मतादिकान् ।**
**बोधयन्त्यो द्वितीयाद्या निर्वक्तव्या विभक्तयः ।।**

(कारिका ६१, ६६) ।

**अग्निपुराण**- द्वे विभक्ती सुप्तिङश्च सुपः सप्त विभक्तयः (३५०/१) ।

**नारदपुराण** - सुपां सप्त विभक्तयः । विभक्तीनां विपर्यासो यथा दध्ना जुहोति हि । (५२/२, ५३/७) ।

कातन्त्रकार ने 'विभक्ति' शब्द की कोई परिभाषा तो नहीं की है, परन्तु उनके प्रयोग की व्यवस्था प्रकृत सूत्र में प्राप्त है । तद्धित-प्रकरण में 'तस्' आदि प्रत्ययों की विभक्तिसंज्ञा की गई है (कात० २/६/२४) । कातन्त्रव्याकरण में स्यादि २१ प्रत्ययों के लिये तथा त्यादि १८ प्रत्ययों के लिये सूत्र नहीं बनाये गये हैं । अतः वृत्तिकार ने स्यादि २१ प्रत्ययों को यहाँ गिनाया है और उनसे सिद्ध होने वाले शब्दों

के कुछ उदाहरण भी दिये हैं । टीकाकार आदि ने २१ प्रत्ययों में आने वाले अनुबन्धों की सार्थकता भी बताई है । पाणिनि ने **"ङ्याप्प्रातिपदिकात्"** (अ० ४/१/१) इस अधिकारसूत्र द्वारा ङ्यन्त तथा आबन्त से भी 'सु-औ' आदि प्रत्यय विहित किये हैं । इसका स्पष्टीकरण करते हुये व्याख्याकारों ने कहा है कि ङ्यन्त और आबन्त शब्दरूपों से ही तद्धित प्रत्यय हों, सुबन्त से न हों-इसलिये यहाँ प्रातिपदिक से भिन्न 'ङ्याप्' का पाठ किया गया है, परन्तु इसे महाभाष्यकार पतञ्जलि आदि (बालमनोरमा ४/१/१) आवश्यक नहीं मानते । इस प्रकार कातन्त्रकार का ही सूत्रनिर्देश अधिक संगत प्रतीत होता है ।

सङ्गीतशास्त्र में जिन मात्राओं से रहित स्वर की नामसंज्ञा की गई है, उन्हीं मात्राओं को विभक्ति कहा गया है । वे मात्राएँ ७ प्रकार की उपलब्ध होती हैं– I, II, III, ≗, ˙, ×, ◡, *,

## ५२. कलापे घुट्संज्ञा

**पञ्चादौ घुट्** (२/१/३) ।

***(दुर्गवृत्तिः)***

स्यादीनामादौ पञ्च वचनानि घुट्संज्ञानि भवन्ति । यथा–सि, औ, जस्, अम्, औ । घुट्प्रदेशाः–"घुटि चासम्बुद्धौ" (२/२/१७) इत्येवमादयः ।

## [ हिन्दी-अनुवाद ] कलापव्याकरण में घुट् संज्ञा

स्यादि विभक्तियों के प्रारम्भिक ५ वचनों की 'घुट्' संज्ञा होती है । जैसे–सि, औ, जस्, अम्, औ । "घुटि चासम्बुद्धौ" (२/२/१७) इत्यादि सूत्रों में घुट् संज्ञा का प्रयोग होता है ।

## ५२. गान्धर्वे मुख्यमात्रासंज्ञा

**त्रीण्यादीनि मुख्यानि** (२/१/३) ।

एकमात्रादीनि त्रीणि चिह्नानि मुख्यमात्रासंज्ञकानि भवन्ति । यथा-I (एकमात्रम्), II (द्विमात्रम्), III (त्रिमात्रम्) ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में मुख्यमात्रासंज्ञक चिह्न

एकमात्रा आदि के तीन चिह्नों की मुख्यमात्रा संज्ञा होती है । जैसे– I (एकमात्रा), II (दो मात्राएँ), III (तीन मात्राएँ) ।

## टिप्पणी-५३

कातन्त्रकार ने यहाँ जिन 'सि-औ-जस्-अम्-औ' इन पाँच प्रत्ययों की 'घुट्' संज्ञा की है । पाणिनि ने उसे सर्वनामस्थान (शि सर्वनामस्थानम्, सुडनपुंसकस्य-अ०

१/१/४२, ४३) कहा है । स्पष्ट है कि 'घुट्' संज्ञा लघुसंज्ञा है, जबकि 'सर्वनामस्थान' एक महती संज्ञा । न्यासकार आदि सर्वनामस्थान को यद्यपि पूर्वाचार्यकृत मानते हैं, तथापि किस पूर्वाचार्य ने इसका सर्वप्रथम प्रयोग किया था–यह ज्ञात नहीं है । कुछ व्याख्याकार तो यह भी कहते हैं कि पाणिनि ने इस संज्ञा का समादर (प्रयोग = व्यवहार) अपने ग्रन्थ में इसलिये किया है कि इससे पूर्वाचार्यों का उपहास सूचित हो और वह इसलिये कि पूर्वाचार्य कितनी महती संज्ञा का प्रयोग करते थे । अस्तु पाणिनि की 'सर्वनामस्थान' संज्ञा में गौरव स्पष्ट है ।

सङ्गीतशास्त्र में इसकी समानता मुख्यमात्रासंज्ञक एकमात्रा आदि के चिह्नों से की गई है ।

## ५३. कलापे घुट्संज्ञा

**जस्शसौ नपुंसके** (२/१/४) ।

*(दुर्गवृत्तिः)*

नपुंसकलिङ्गे जस्-शसौ घुट्संज्ञकौ भवतः । यथा–सामानि तिष्ठन्ति । सामानि पश्य । नपुंसके जसेव घुडिति नियमाद् वारिणी, जतुनी ।

## [ हिन्दी-अनुवाद ] कलापव्याकरण में घुट् संज्ञा

नपुंसकलिङ्ग में 'जस्-शस्' प्रत्ययों की घुट् संज्ञा होती है । जैसे–सामानि तिष्ठन्ति । सामानि पश्य । नपुंसकलिङ्ग में 'जस्' प्रत्यय की ही घुट् संज्ञा मान्य है– इस नियम के अनुसार 'वारिणी, जतुनी' प्रयोग सिद्ध होते हैं ।

## ५३. गान्धर्वे ह्रस्वदीर्घसंज्ञे

**एकद्वयोर्ह्रस्वदीर्घौ** (२/१/४) ।

एकमात्रद्विमात्रयोर्ह्रस्वदीर्घसंज्ञे भवतो यथासंख्यम् । एको ह्रस्वः । द्वौ दीर्घौ ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में ह्रस्व-दीर्घ संज्ञाएँ

एकमात्रा की ह्रस्वसंज्ञा तथा दो मात्राओं की दीर्घ संज्ञा होती है ।

## टिप्पणी-५४

'द्र०-टिप्पणी संख्या-५३

## ५४. कलापे सम्बुद्धिसञ्ज्ञा

**आमन्त्रिते सिः सम्बुद्धिः** (२/१/५) ।

*(दुर्गवृत्तिः)*

सिद्धस्याभिमुखीकरणमामन्त्रितम् । तस्मिन्नर्थे विहितः सिः सम्बुद्धिसंज्ञो भवति ।

यथा–हे अम्ब ! हे वृक्ष ! [ **पाठा०**-सम्बुद्धिप्रदेशाः–"सम्बुद्धौ च" (२/१/३९, ५६ ] इत्येवमादयः ।

## [ हिन्दी-अनुवाद ] कलापव्याकरण में सम्बुद्धिसंज्ञा

किसी व्यक्ति को अपने सम्मुख कर लेने को आमन्त्रित कहते हैं । उस अर्थ में किए जाने वाले 'सि' प्रत्यय की 'सम्बुद्धि' संज्ञा होती है । जैसे–हे अम्ब ! हे वृक्ष! इत्यादि ।

# ५४. गान्धर्वे सम्बुद्धिसञ्ज्ञा

**आमन्त्रिते प्लुतः सम्बुद्धिः** (२/१/५) ।

सिद्धस्याभिमुखीकरणमामन्त्रितम् । तस्मिन्नर्थे विहितः प्लुतः सम्बुद्धिसंज्ञो भवति । यथा—'आगच्छ भो देवदत्त अत्र, तिष्ठ भो यज्ञदत्त इह' इत्यादि ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में सम्बुद्धि संज्ञा

आमन्त्रित का अर्थ होता है-किसी को अपने सम्मुख कर लेना । उस अर्थ में किए जाने वाले प्लुत की 'सम्बुद्धि' संज्ञा होती है । जैसे–'आगच्छ भो देवदत्त३ अत्र, तिष्ठ भो यज्ञदत्त३ इह' इत्यादि ।

## टिप्पणी-५५

पाणिनि ने संबोधन में विहित प्रथमा विभक्ति की आमन्त्रितसंज्ञा स्वीकार की है–"संबोधने च, साऽऽमन्त्रितम्" (२/३/४७,४८) और उसमें एकवचन सु-प्रत्यय की संबुद्धि संज्ञा "एकवचनं सम्बुद्धिः" (२/३/४९) । इस प्रकार पाणिनि आमन्त्रित को योगरूढ स्वीकार करते हैं, जबकि कातन्त्रकार ने आमन्त्रित को यौगिक मानकर तदर्थ संज्ञासूत्र बनाने की कोई आवश्यकता नहीं समझी और उस आमन्त्रित अर्थ में 'सि' (प्रथमा-एकवचन) की संबुद्धि संज्ञा-हेतु प्रकृत सूत्र बनाया है । यही दोनों व्याकरणों में संबुद्धिसंज्ञा की विशेषता है । वृत्तिकार दुर्गसिंह द्वारा प्रस्तुत 'सिद्ध' शब्द के ३ अर्थ व्याख्याकारों ने किये हैं–*नित्य, निष्पन्न और प्रसिद्ध* । उनमें से यहाँ प्रसिद्ध अर्थ ग्राह्य है । 'सिद्धि' शब्द को विद्यमानार्थक मानकर कलापचन्द्रकार सुषेण विद्याभूषण ने कहा है कि अविद्यमान का संबोधन नहीं हो सकता है ।

सङ्गीतशास्त्र के अनुसार आमन्त्रित अर्थ में किए जाने वाले प्लुत की सम्बुद्धि संज्ञा करके व्याकरणशास्त्रीय मान्यता से सादृश्य दिखाया गया है ।

# ५५. कलापे आगमव्यवस्था

**आगम उदनुबन्धः स्वरादन्त्यात् परः** (२/१/६) ।

***(दुर्गवृत्तिः)***

प्रकृतिप्रत्यययोरनुपघाती आगमः । आगम उदनुबन्धोऽन्त्यस्वरात् परः परिभाष्यते । यथा-पद्मानि, पयांसि [ **पाठा०**-आगम इति किम् ? विद्युत्वान् । उदनुबन्ध आगमस्य लिङ्गम् ] ।

## [ हिन्दी-अनुवाद ] कलापव्याकरण में आगम की व्यवस्था

प्रकृति-प्रत्यय का किसी भी प्रकार उपघात न करने वाला आगम होता है । उकारानुबन्ध वाले आगम की प्रवृत्ति अन्तिम स्वर के बाद होती है । जैसे–पद्मानि, पयांसि ।

## ५५. गान्धर्वे आगमसंज्ञा

**श्रुतिस्वरयोरनुपघात्यलङ्कारश्चागमः** (२/१/६) ।

***(दुर्गवृत्तिः)***

प्रकृतिप्रत्यययोः श्रुतिस्वरयोरनुपघाती अननिष्टकारी योऽलङ्कारः स आगमसंज्ञो भवति । यथा–गमक - तान - कृन्तनादयश्चैतेऽलङ्कारा आगमरूपिणो भवन्ति ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में आगमसंज्ञा

प्रकृति-प्रत्यय अर्थात् श्रुति-स्वर का उपघात न करने वाले अलङ्कार को 'आगम' कहते हैं, अर्थात् उसकी 'आगम' संज्ञा होती है । जैसे-गमक-तान-कृन्तन आदि अलङ्कार आगम के रूप में होते हैं ।

## टिप्पणी–५६

आगच्छतीत्यागमः। जो प्रकृति-प्रत्यय का उपघात किए विना ही प्रवृत्त होता है, उसे आगम कहते हैं–'प्रकृतिप्रत्यययोरनुपघाती आगमः'। आपिशलि आचार्य ने भी आगम-विकार-आदेश-लोप की परिभाषा करते हुए कहा है—

***आगमोऽनुपघातेन विकारश्चोपमर्दनात् ।***
***आदेशस्तु प्रसङ्गेन लोपः सर्वापकर्षणात् ।।***

प्रकृति–प्रत्यय का उपघात न करने के कारण ही आगम को मित्रवत् कहा जाता है । पाणिनि ने जो 'नुम्' आदि मित् आगम किए हैं और उनके लिए परिभाषा-सूत्र बनाया है—"मिदचोऽन्त्यात् परः" (पा०अ० १/१/४७) । कलापव्याकरण में ऐसे ही आगमों को उकार अनुबन्ध के साथ किया गया है । जैसे—'नु, मु' इत्यादि । इन्हीं आगमों की स्थान-व्यवस्था के लिये यह सूत्र बनाया है । तदनुसार उदनुबन्ध आगम अन्तिम स्वर के बाद होते हैं । जो आगम आदि या अन्त में प्रवृत्त होते हैं, उनका निर्देश सम्बद्ध सूत्रों में ही कर दिया गया है ।

सङ्गीतशास्त्र में प्रकृति-प्रत्ययरूप श्रुति-स्वर का उपघात न करने वाले अलङ्कारों

की जो आगम संज्ञा की गई है, उसका अर्थत: व्याकरणशास्त्रीय आगम से पूर्णतया सम्बन्ध सिद्ध होता है ।

## ५६. कलापे 'स्मै' - आदेशः

**स्मै सर्वनाम्नः** (२/१/२५) ।

*(दुर्गवृत्तिः)*

अकारान्तात् सर्वनाम्नो लिङ्गात् परस्य ङे-वचनस्य 'स्मैः' भवति । यथा– सर्वस्मै, विश्वस्मै । [ **पाठा०** -सर्वेषां नामेति किम् ? विश्वो नाम कश्चित् । विश्वमतिक्रान्त: अतिविश्व:, तस्मै अतिविश्वाय । **तीयाद् वा वक्तव्यम्**–द्वितीयस्मै, द्वितीयाय । तृतीयस्मै, तृतीयाय । किन्तत् सर्वनाम-सर्व, विश्व, उभ, उभय, अन्य, अन्यतर, इतर, डतर, डतम इत्यादि]। [ **पाठा०** -वृत् । त्व, नेम, सम, सिम । पूर्वापरावरदक्षिणोत्तरपराधराणि व्यवस्थायामसंज्ञायाम्, स्वमज्ञातिधनाख्यायाम्, अन्तरं बहिर्योगोपसंव्यानयो: । वृत् । त्यद्, तद्, यद्, एतद्, अदस्, इदम्, किम्, एक, द्वि, युष्मद्, अस्मद्, भवन्त् ] ।

## [ हिन्दी-अनुवाद ] कलापव्याकरण में स्मै-आदेश

सर्वनामसंज्ञक अकारान्त लिङ्ग से परवर्ती 'ङे' प्रत्यय को 'स्मै' आदेश होता है । जैसे–'सर्वस्मै, विश्वस्मै' इत्यादि । सर्वनामसंज्ञा–सर्व, विश्व, उभ, उभय, अन्य, अन्यतर, इतर, डतर, डतम' इत्यादि शब्दों की होती है ।

## ५६. गान्धर्वे सर्वनामसंज्ञा

**ग्रामाश्रिताः सर्वनामानः** (२/१/७) ।

सर्वे ग्रामाश्रिता: ग्रामानुगता: स्वरादय: सर्वनामसंज्ञा भवन्ति ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में सर्वनाम संज्ञा

ग्राम के आश्रित रहने वाले अर्थात् ग्राम का अनुसरण करने वाले स्वरादि की सर्वनाम संज्ञा होती है ।

## टिप्पणी–५७

'सर्व+ङे' इस अवस्था में पाणिनि और शर्ववर्मा दोनों ही वैयाकरण आचार्य 'ङे' को 'स्मै' आदेश करके 'सर्वस्मै' शब्दरूप सिद्ध करते हैं । अत: आदेश-विधान की दृष्टि से उभयत्र साम्य ही है । परन्तु गणपठित शब्दक्रम के अनुसार विशेषता यह है कि कातन्त्रकार सर्वादिगण में 'द्वि' शब्द से पूर्व ही 'किम्' शब्द का पाठ करते हैं, इसके विपरीत पाणिनीय गण में 'किम्' शब्द का पाठ द्वि-शब्द के अनन्तर किया गया है । इसीलिये **''किंसर्वनामबहुभ्योऽद्व्यादिभ्य:''** (अ० ५/३/२) इस सूत्र में

पाणिनि ने द्व्यादिगण से अतिरिक्त 'किम्' शब्द पढ़ा है । यदि उसे पृथक् से न पढ़ा जाता तो द्व्यादिगण के अन्तर्गत पठित होने के कारण उससे भी 'तसिल्' आदि प्रत्यय नहीं होते । इसके विपरीत कातन्त्र में 'द्वि' से पूर्व ही 'किम्' शब्द का पाठ होने से 'तसिल्' आदि प्रत्ययों के विधायक सूत्र में 'किम्' शब्द का पाठ नहीं किया गया है—

**विभक्तिसंज्ञा विज्ञेया वक्ष्यन्तेऽतः परं तु ये ।**

**अद्व्यादेः सर्वनाम्नस्ते बहोश्चैव पराः स्मृताः ।।** (कात० २/६/२४) ।

कातन्त्रकार ने **सर्वेषां नाम सर्वनाम** अर्थात् उन शब्दों की 'सर्वनाम' संज्ञा प्रसिद्ध है, जो साकल्य अर्थ के प्रतिपादक हैं—इस प्रकार सर्वनाम की अन्वर्थता बताकर सर्वनाम संज्ञा-विधायक सूत्र नहीं बनाया है । साकल्यार्थप्रतिपादक शब्दों की ही सर्वनाम संज्ञा माने जाने के कारण 'विश्व' आदि संज्ञा-शब्दों में तथा 'विश्वमतिक्रान्तोऽतिविश्वः' आदि में सर्वनामसंज्ञा-प्रयुक्त कार्य प्रवृत्त नहीं होते हैं— 'विश्वाय, अतिविश्वाय' । कातन्त्र में 'न गौणे सार्वनामिकम्' वचन प्रसिद्ध है । 'सर्व' आदि शब्दों को गण में पढ़े जाने के कारण 'जगत्, कृत्स्न, निखिल' आदि सर्वार्थप्रतिपादक शब्दों की सर्वनामसंज्ञा नहीं होती है । व्याख्याकारों ने 'तीयाद् वा वक्तव्यम्, स्वमज्ञातिधनाख्यायाम्' आदि वार्त्तिकसूत्र-अन्तर्गणसूत्र पढ़कर 'द्वितीयस्मै, द्वितीयाय' आदि रूपों का भी साधुत्व दिखाया है । 'पश्चिम, प्रथम, द्वय' आदि की सर्वनामता के विषय में व्याख्याकारों के विचार पठनीय हैं ।

सङ्गीतशास्त्र में ग्राम का अनुसरण करने वाले स्वरादि की जो सर्वनामसंज्ञा की गई है, उससे व्याकरणशास्त्रीय सर्वनाम संज्ञा के साथ पर्याप्त सादृश्य बताने का प्रयत्न किया गया है ।

## ५७. कलापे सर्वनामकार्यप्रतिषेधः

**नान्यत् सार्वनामिकम्** (२/१/३३) ।

***(दुर्गवृत्तिः)***

चकारोऽनुवर्तते । द्वन्द्वस्थस्य सर्वनाम्नो लिङ्गस्योक्तमन्यच्च सार्वनामिकं कार्यं न भवति । यथा–पूर्वापराय, पूर्वापरात्, दक्षिणोत्तरपूर्वाणाम् ।

## [ हिन्दी-अनुवाद ] कलापव्याकरण में सार्वनामिक कार्यों का निषेध

द्वन्द्वसमास में सर्वनामसंज्ञक लिङ्ग में सर्वनामसम्बन्धी कार्य नहीं होते हैं । जैसे–'पूर्वापराय, पूर्वापरात्, दक्षिणोत्तरपूर्वाणाम्' इत्यादि ।

## ५७. गान्धर्वे सर्वनामकार्यप्रतिषेधः

**तेषु भ्रष्टेषु न सार्वनामिकम्** (२/१/८) ।

तेषु स्वरादिभ्रष्टेषु ग्रामातिक्रान्तेषु च सार्वनामिकं कार्यं न भवति । ग्रामातिक्रान्तेषु एकस्माद् ग्रामादन्यस्मिन् ग्रामे गतेष्वपीत्यर्थः ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में सार्वनामिक कार्यों का अभाव

स्वरादि से हीन में तथा ग्राम का अतिक्रमण करने वाले ग्रामरहित या एक ग्राम से अन्य ग्राम को प्राप्त करने वाले में सर्वनामप्रयुक्त कार्य नहीं होते हैं ।

## टिप्पणी–५८

द्वन्द्व तथा बहुव्रीहि समास में सामान्यतया सर्वनामप्रयुक्त कार्यों का निषेध कलापव्याकरण में किया गया है। तदनुसार 'पूर्वापराय, पूर्वापरात्, वस्त्रान्तरवसनान्तराः' आदि शब्दरूप सिद्ध होते हैं । कलाप में सर्वनामसंज्ञा न होने से सर्वनामप्रयुक्त कार्य का निषेध किया गया है, जबकि पाणिनि के अनुसार सर्वनामसंज्ञा का ही निषेध होता है।

सङ्गीतशास्त्र के अन्तर्गत स्वरादि से हीन इत्यादि में जो सार्वनामिक कार्यों का अभाव दिखाया गया है, इससे व्याकरणशास्त्रीय पर्याप्त समानता स्थापित करने का प्रयत्न कहा जा सकता है।

**तुलनात्मक नामचतुष्टयप्रकरण-प्रथम पाद समाप्त ।**



# अथ सङ्गीतशास्त्रीयं नादप्रकरणम्

## ५८. गान्धर्वे नादस्य लक्षणम् उद्भवश्च

**न नादेन विना गीतं न नादेन विना स्वरः ।**
**न नादेन विना रागस्तस्मान्नादात्मकं जगत् ।।**इति।
(सं० र०-सुधाकरटीका-अ० १, प्र० २, श्लो० १-३),
**स हृत्कण्ठशिरोभ्यश्चोत्पन्नः** (२/१/९) ।

स नादो हृत्कण्ठशिरोभ्य: स्थानत्रयेभ्यश्चोत्पन्नो भवति । यथा–**सङ्गीतार्णवे** सुधाकरः–

**स हृत्कण्ठशिरोभ्यश्च त्रिस्थानेभ्यो यथाक्रमम् ।**
**द्वाविंशतिविभागेन श्रुतिरूपोऽभवत् सदा ।।१।**
**हृत्कण्ठशिर इत्येषां द्विगुणादुत्तरोत्तरम् ।**
**प्रत्येकं स्थानमेतच्च द्वाविंशतिविधं भवेत् ।।२।**
**हृद्यूर्ध्वनाडिकालग्ना नाड्यो द्वाविंशतिः शुभाः ।**
**ताश्च वक्रास्तथोर्ध्वस्था ध्वनयो मरुदाहृताः ।।३।**
**एते तु ध्वनिभेदाः स्युः श्रवणात् श्रुतिसंज्ञिताः ।**
**उच्चोच्चभावमापन्ना द्विगुणादुत्तरोत्तरम् ।।४।**

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में नादविषयक विशेष मान्यताएँ

### नादलक्षण

नाद के विना न तो गीत प्रतिष्ठित हो सकता है और न ही स्वर तथा राग। फलत: यह समग्र संसार नादात्मक ही सिद्ध होता है ।

### नाद का तीन स्थानों से उद्भव

उक्त प्रकार का नाद हृदय, कण्ठ तथा शिर इन तीन स्थानों से उत्पन्न होता है । जैसे कि आचार्य सुधाकर ने **सङ्गीतार्णव** नामक ग्रन्थ में कहा भी है—

वह नाद 'हृदय - कण्ठ - शिर' इन तीन स्थानों से क्रमश: उत्पन्न होकर २२ श्रुतियों के रूप में स्थित होता है । हृदय - कण्ठ - शिर स्थानों के उत्तरोत्तर द्विगुण होने से प्रत्येक स्थान के २२ भेद हो जाते हैं । हृदय के ऊर्ध्वभाग में स्थित नाडी से २२ शुभ नाडियाँ मिली हुई हैं, उनमें कुछ तो वक्र = तिरछी हैं और कुछ ऊपर की ओर उठी हुई हैं । इन्हीं में मरुत् = वायु के आघात से ध्वनियाँ पैदा होती हैं । इन ध्वनिभेदों का जब श्रवण होता है, तो उनकी 'श्रुति' संज्ञा हो जाती है, जो उच्च तथा उच्चतम भाव को प्राप्त होती रहती हैं ।

## ५९. गान्धर्वे श्रुतीनामुद्भवः

**नादाच्च श्रुतयः** (२/१/१०) ।

नादात् शब्दाद् द्वाविंशतिः श्रुतयो जाताः । तथा च **गीतनारायणे**–

**नादाच्च श्रुतयो जातास्ताभ्यः षड्जादयः स्वराः ।**
**तेभ्यः स्युर्मूर्च्छनास्ताभ्यस्तानाख्या ग्रामसम्भवाः** ।।इति।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में श्रुतियों का उद्भव

नाद (शब्द) से २२ श्रुतियाँ उत्पन्न हुई हैं । गीतनारायण में कहा गया है कि नाद से श्रुतियाँ, श्रुतियों से षड्ज आदि स्वर, स्वरों से मूर्च्छनाएँ और उनसे तानें उत्पन्न हुई हैं ।

## ६०. गान्धर्वे श्रुतिसंज्ञा

**श्रवणग्राह्यत्वाद् ध्वनिरेव श्रुतिः** (२/१/११) ।

श्रवणेन्द्रियग्रहणयोग्यत्वाद् ध्वनिरेव श्रुतिसंज्ञो भवति । तथा च **सङ्गीतसुधाकरे**—

**श्रवणेन्द्रियग्राह्यत्वाद् ध्वनिरेव श्रुतिर्भवेत् ।**
**सैव द्वाविंशतिर्ज्ञेया स्वरक्रमविभागतः ।।**
**नियताः श्रुतयः सर्वाः स्वरगुणप्रकाशिकाः ।**
**तस्मात् स्वरगता ज्ञेयाः श्रुतयः श्रुतिवेदिभिः ।।**

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में श्रुतियाँ

श्रवणेन्द्रिय के द्वारा ग्रहणयोग्य होने के कारण ध्वनियों को ही श्रुति कहते हैं । सङ्गीतसुधाकर में कहा गया है कि श्रवणेन्द्रिय से ग्राह्य होने के कारण ध्वनि ही श्रुति नाम से कही जाती है, वह श्रुति स्वरक्रम-विभाग के कारण २२ प्रकार की होती है । श्रुतियों से स्वर के गुण प्रकाशित होते हैं, इसलिये श्रुतिविशेषज्ञ विद्वान् श्रुतियों को स्वर से सम्बद्ध मानते हैं ।

**अन्यच्च–**

## ६१. गान्धर्वे श्रुतिभेदाः

**नादद्वाविंशतिभेदाः श्रुतयः** (२/१/१२) ।

नादद्वाविंशतिप्रकारा भेदाः श्रुतयो भवन्ति । तथा च **नारदः**-

**नादद्वाविंशतिर्भेदाः श्रुतयः परिकीर्तिताः ।**
**क्रमादुच्चोच्चतायुक्ता वीणया च सुलक्षिताः ।।**
**तारवीणाधरैश्चैव सुव्यक्तो जायते किल ।**
**कफादिदुष्टकण्ठे च श्रुतिव्यक्तो न जायते ।**
**स्वरमण्डलयन्त्रादौ दर्शयन्ति सुशिक्षिताः ।।**

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में श्रुतियों के २२ भेद

नाद के २२ प्रकार होने के कारण श्रुतियाँ भी २२ प्रकार की होती हैं। ये क्रमश: उच्च तथा उच्चतर होती जाती हैं, जिनका स्पष्ट परिज्ञान वीणा से होता है। तारस्वर वाली वीणा के बजाने पर श्रुतियों की स्पष्टता का अवबोध होता है। कण्ठ के कदाचित् दोषग्रस्त होने पर श्रुतियाँ स्पष्ट नहीं हो पाती हैं, इसलिये शिक्षित व्यक्ति स्वरमण्डल तथा यन्त्र आदि में उन्हें दिखाते हैं।

## ६२. गान्धर्वे स्वरप्रकाशनम्

**अन्यच्च —**

**श्रुतिभिः स्वराः प्रतिभान्ति** (२/१/१३)।

श्रुतिभि: षड्जादिसप्तस्वरा: प्रतिभान्ति, अर्थात् स्वकीया: प्रतिभा: प्रकाशयन्ति। तथा च **नारायणः**—

**नराणान्तु मुखं यद्वद् दर्पणेन विकासितम्।**
**प्रतिभान्ति स्वरास्तद्वत् श्रुतिभिः सह योगतः॥**
**षड्जादयः स्वराः सर्वे दीप्यन्ते श्रुतिभिः सह।**
**अन्धकारस्थिता यद्वत् प्रदीपेन घटादयः॥**

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में स्वरों का प्रकाशन

श्रुतियों के द्वारा षड्ज आदि सात स्वर प्रतिभासित होते हैं। अर्थात् वे अपनी प्रतिभा को प्रकाशित करते हैं। नारायण ने कहा है–मनुष्य का मुख जैसे दर्पण से विकसित हो जाता है, उसी प्रकार श्रुतियों के योग से स्वर प्रतिभासित होते हैं। जैसे अन्धकार में रखे हुए घटादि पदार्थ दीपक की प्रभा से प्रकाशित हो जाते हैं, उसी प्रकार श्रुतियों के द्वारा स्वरों का भी प्रकाशन होता है।

## ६३. गान्धर्वे श्रुतिपरिणामाः स्वराः

**स्वराः श्रुतीनां परिणामाः** (२/१/१४)।

षड्जादय: स्वरा: सर्वे श्रुतीनां परिणामा: स्मृता: कथिता इत्यर्थ:। तथा च उक्तं **मतङ्गेन-**

**श्रुतीनाञ्च स्वराः सर्वे परिणामगताः स्मृताः।**
**परिणामे यथा क्षीरं दधिरूपेण सर्वदा॥**

।। इति वेदान्तदर्शन-व्याकरण-सङ्गीतादि-नानाशास्त्रविशारद-ठाकुरोपाधिक-श्रीमद्धरकुमारजसङ्गीतनायक-श्रीमच्छौरीन्द्र-कृत-गान्धर्ववृत्तौ नाम्नि गान्धर्वचतुष्टये प्रथमः पादः समाप्तः ।।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में श्रुतियों के परिणामरूप स्वर

षड्ज आदि सात स्वर श्रुतियों के परिणाम कहे गए हैं । इस विषय में आचार्य मतङ्ग ने कहा है—जैसे क्षीर का परिणाम दधि होता है, ठीक उसी प्रकार श्रुतियों के परिणाम स्वर होते हैं ।

**नामचतुष्टयप्रकरण-प्रथम पाद समाप्त ।**

●



# *अथ चतुष्टयवृत्तिः*
## *द्वितीयः पादः*

## ६४. गान्धर्वे ग्रामाः

**यमाश्रित्य षट् स्वरा व्यक्ताः स ग्रामः** (२/२/१) ।

यं स्वरमाश्रित्य अवलम्ब्य षट् स्वरा व्यक्ता भवन्ति, स ग्रामः कथ्यते सर्वैर्भरतादिमहर्षिभिः ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में ग्राम की मान्यता

जिस किसी एक स्वर के आधार पर अन्य छह स्वर अभिव्यक्त होते हैं, उसे भरत आदि सभी महर्षियों ने ग्राम कहा है ।

## ६५. गान्धर्वे ग्रामसंज्ञा

**स्वराणां सूक्ष्मभावसंयोगी ग्रामः** (२/२/२) ।

षड्जादिसप्तस्वराणां सूक्ष्मभावसंयोगि यत् स्थानं तद्ग्रामसंज्ञम्भवति । यथा-षड्जग्रामे अन्ये स्वराः सूक्ष्मभावसंयोगरूपेण स्थिता इत्यर्थः । तथा च **नारायणः**– 'स्वराणां सूक्ष्मभावसंयोगि यत् तत् स्थानं ग्राम उच्यते' ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में ग्रामसंज्ञा

षड्ज आदि सात स्वरों में सूक्ष्मभाव का संयोग कराने वाले स्थान की ग्रामसंज्ञा होती है । जैसे–षड्ज ग्राम में अन्य छह स्वर भी सूक्ष्मरूप से स्थित रहते हैं । आचार्य नारायण ने कहा भी है–स्वरों के सूक्ष्मभाव = सूक्ष्मता का संयोग कराने वाले स्थान को ग्राम कहते हैं ।

## ६६. गान्धर्वे ग्रामपरिभाषा

**सुव्यवस्थासमूहो ग्रामः** (२/२/३) ।

स्वराणां षड्जादिसप्तस्वराणां सुव्यवस्थासमूहो ग्रामः, कथ्यते इति शेषः । यथा-षड्जग्रामे अपराः स्वराः सुव्यवस्थारूपेण च प्रतिवसन्ति । तथा च **रत्नाकरे**-स्वराणाञ्च सुव्यवस्थासमूहो ग्राम इष्यते । विशेषतः **सुधाकरे** च–

**यथा कुटुम्बिनः सर्वे एकीभूता वसन्ति हि ।**
**सर्वलोकेषु स ग्रामस्तथा नित्यं व्यवस्थितः ।।**इति।

(द्र०, सं० र०-सुधाकरटीका, अ०१, प्र०४, श्लो० १-५) ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में ग्राम की परिभाषा

षड्ज आदि सात स्वरों के व्यवस्थासमूह को ग्राम कहते हैं । जैसे–षड्ज ग्राम में अन्य ऋषभ आदि भी छह स्वर व्यवस्थित रूप से रहते हैं । आचार्य रत्नाकर ने इस विषय में कहा भी है–जैसे विविध परिवारों के सभी सदस्य (अर्थात् जनसमुदाय) एक जगह मिलकर जहाँ रहते हैं, उसे 'ग्राम' कहा जाता है । उसी प्रकार से सङ्गीतशास्त्र में जहाँ सभी स्वर निवास करते हैं, उसे ग्राम यह नाम दिया गया है ।

## ६७. गान्धर्वे ग्रामसंज्ञाः

अपरञ्च –

**श्रुतिस्वरमूर्च्छनानामाश्रयो ग्रामः** (२/२/४) ।

यः श्रुतिस्वरमूर्च्छनानामाश्रयीभूतः सः ग्रामसंज्ञो भवति । यथा-षड्जग्रामो यः स तद्ग्रामस्थितश्रुतिस्वरमूर्च्छनानामाश्रयीभूतः । यथा **नारदसंहितायाम् –**

***स्वराणां मूर्च्छनानाञ्च श्रुतीनाञ्च विशेषतः ।**
**एतेषामाश्रयो ग्रामो विद्वद्भिः परिकीर्तितः** ।।इति।

तथाहि **रत्नाकरे–ग्रामः स्वरसमूहानां मूर्च्छनादेः समाश्रयः ।**

(सं०र०-अ०१, प्र० ४, श्लो० १) [ **पाठा०**–ग्रामः स्वरसमूहः स्यान्मूर्छनादेः समाश्रयः ]

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में ग्राम संज्ञा की विशेष परिभाषा

'श्रुति-स्वर-मूर्च्छना' का जो आश्रय होता है, उसे ग्राम कहते हैं । जैसे षड्ज-ग्राम उस ग्राम में स्थित सभी श्रुतियों, स्वरों तथा मूर्च्छनाओं का आश्रय माना जाता है । इस विषय में **नारदसंहिता** में कहा गया है कि विद्वान् उसे ग्राम कहते हैं जो सभी 'स्वर–मूर्च्छना-श्रुतियों' का विशेष आश्रय होता है । **रत्नाकर** नामक ग्रन्थ में भी स्वरसमूह तथा मूर्च्छना इत्यादि के आश्रय को ग्राम नाम दिया गया है ।

---

*– द्र०, सं० र०–सुधाकरटीका, अ०१, प्र० ४, श्लोक १-५
स्वराणां मूर्च्छनातानजातिजात्यंशकात्मनाम् ।
व्यवस्थितश्रुतीनां हि समूहो ग्राम इष्यते ।।
**कलानिधिटीका**–यथा लोके जनसमूहो ग्राम इत्युच्यते, एवमत्र स्वरसमूहो ग्राम इति विवक्षितः ।

## अथ सङ्गीतस्वरसाध्यप्रकरणम्

## ६८. गान्धर्वे त्रयो ग्रामाः

**तत्रादौ षड्जादिग्रामत्रयी** (२/२/५)।

षड्जमध्यमगान्धाराश्च त्रयः स्वराः क्रमेण ग्रामसंज्ञा भवन्ति। यथा–षड्जग्रामो मध्यमग्रामो गान्धारग्रामश्च। ग्रामस्त्रिविधो यथा **रत्नावल्याम्–**

**त्रयो ग्रामा निगदिता घोरो मन्द्रश्च तारकः।**
**षड्जमध्यमगान्धारग्रामास्त्रितयसंज्ञिताः ॥**

केचिच्चलवीणामधिकृत्याहुः–

**नाभिमध्ये स्थितो घोरो मन्द्रको हृदयस्थितः।**
**शिरोगतस्तथा तारस्त्रयो ग्रामा इमे स्मृताः ॥**

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में तीन ग्राम

षड्ज, मध्यम तथा गान्धार इन तीन स्वरों के क्रमशः ग्राम होते हैं–१. षड्ज-ग्राम, २. मध्यमग्राम तथा ३. गान्धारग्राम। रत्नावली के अनुसार घोर, मन्द्र और तारक नाम वाले षड्ज, मध्यम और गान्धार ये तीन ग्राम स्वीकार किये जाते हैं।

कुछ विद्वान् चलवीणा के अधिकार से घोर, मन्द्र तथा तार ये तीन ग्राम मानते हैं। घोरग्राम नाभि के मध्य में, मन्द्रकग्राम हृदय में तथा तारग्राम शिरोदेश में रहता है।

## ६९. गान्धर्वे षड्जग्राम-श्रुति-मूर्च्छनालक्षणम्

प्रथमतः षड्जग्रामलक्षणम् –

**प निर्विकारी यद्ग्रामे तद्ग्रामः षड्जः स्मृतः** (२/२/६)।

यत्स्वरग्रामे कृते पञ्चमो निर्विकारी भवति, सः षड्जग्रामः स्मृतः कथितः इत्यर्थः[१]।

अस्मिन् श्रुतिविवरणम्, यथा **रत्नाकरे–**

**चतस्रः पञ्चमे षड्जे मध्यमे च तथा मताः।**
**ऋषभे धैवते तिस्रो द्वे गान्धारनिषादयोः ॥**

तदुदाहरणं यथा–

---

१. तथा च **रत्नाकरे**–पञ्चमश्चेन्निर्विकारी षड्जग्रामः स उच्यते।
तथा च **दर्पणे** – षड्जग्रामः पञ्चमे तु चतुर्थश्रुतिसंस्थिते।
(द्र०, सं० र०–अ०१, प्र० ४, श्लो० २)।

स *|*** ऋ *|** ग*—* म *|***

प *|*** ध *|** नि *—*

षड्जग्रामे मूर्च्छनालक्षणम्। यथा **नारायणे**–

**आदि-द्वि-त्रि-चतुः-पञ्च-षट्-सप्तस्वपि ता मताः ।**
**षड्जान्निषादपर्यन्तं निषादाद् धैवतान्तकम् ।**
**धैवतात् पञ्चमान्तं तु पञ्चमान्मध्यमान्तकम् ।**
**गान्धारान्तं मध्यमात् स्याद् गान्धाराद् ऋषभान्तकम् ।**
**ऋषभात् सान्तमित्याहुः षड्जग्रामस्य मूर्च्छना ।।**

अथोदाहरणम् । यथा - स ऋ ग म प ध नि च, नि स ऋ ग म च, ग म प ध नीत्यन्तञ्च । इति षड्जग्राममूर्च्छना ।

## षड्जग्रामे शब्दाः

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| । एकमात्रा | I | I I | I I I I |
| | स | स ऋ | स ऋ स स |
| ।। द्विमात्रा | II | II II | II II II II |
| | स | स ऋ | स ऋ ग स |
| ।।। त्रिमात्रा | III | III III | III III III III III |
| | स | स ग | स ऋ ग म स |
| ॅ अर्द्धमात्रा | ॅ | ॅ ॅ | ॅ ॅ ॅ ॅ ॅ ॅ ॅ |
| | स | स म | स ऋ ग म प स स |
| × पादमात्रा | × | × × | × × × × × × × × |
| | स | स प | स ऋ ग म प ध स स |
| ◡ पादार्धमात्रा | ◡ | ◡ ◡ | ◡◡◡◡◡◡◡◡◡ |
| | स | स ध | स ऋ ग म प ध नि स स |
| * पादपादमात्रा | * | * * | * * * * * * * * * |
| | स | स नि | स ऋ ग म प ध नि स स |

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में षड्जग्राम का लक्षण

जिस स्वरग्राम के विधान में पञ्चम स्वर निर्विकारी रहता है, उसे षड्जग्राम कहते हैं । रत्नाकर तथा दर्पण में इसी प्रकार के लक्षण दिये गये हैं । (टिप्पणी-वचन द्रष्टव्य है) । रत्नाकर ग्रन्थ के अनुसार 'पञ्चम-षड्ज-मध्यम' ग्रामों में चार-चार श्रुतियाँ रहती हैं, जबकि 'ऋषभ-धैवत' में ३-३ तथा 'गान्धार-निषाद' में २-२ श्रुतियाँ देखी जाती हैं । जैसे–

स * * * *    ऋ * * *    ग * — *    म * * * *

प * * * *    ध * * *    नि * — *

नारायण के अनुसार षड्ज-ग्राम में मूर्च्छना का लक्षण-षड्ज से निषाद पर्यन्त । जैसे - स ऋ ग म प ध नि च । निषाद से धैवतपर्यन्त, जैसे–नि स ऋ ग म च, ग म प ध । इसी प्रकार धैवत से पञ्चम पर्यन्त, पञ्चम से मध्यमपर्यन्त, मध्यम से गान्धारपर्यन्त, गान्धार से ऋषभपर्यन्त तथा ऋषभ से षड्जपर्यन्त षड्जग्राम की मूर्छनाएँ होती हैं ।

### षड्जग्राम में शब्द

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| । एकमात्रा | I | I I | I I I I |
| | स | स ऋ | स ऋ स स |
| ।। द्विमात्रा | II | II II | II II II II |
| | स | स ऋ | स ऋ ग स |
| ।।। त्रिमात्रा | III | III III | III III III III III |
| | स | स ग | स ऋ ग म स |
| ˘ अर्द्धमात्रा | ˘ | ˘ ˘ | ˘ ˘ ˘ ˘ ˘ ˘ ˘ |
| | स | स म | स ऋ ग म प स स |
| × पादमात्रा | × | × × | × × × × × × × × |
| | स | स प | स ऋ ग म प ध स स |
| ◡ पादार्धमात्रा | ◡ | ◡ ◡ | ◡◡◡◡◡◡◡◡◡ |
| | स | स ध | स ऋ ग म प ध नि स स |
| * पादपादमात्रा | * | * * | * * * * * * * * * |
| | स | स नि | स ऋ ग म प ध नि स स |

## ७०. गान्धर्वे मध्यमग्रामः

**ऋषभः पञ्चमो यत्र स ग्रामो मध्यमः स्मृतः** (२/२/७) ।

यत्र ग्रामे ऋषभः पञ्चमो भवति, स मध्यमग्रामः स्मृतः कथित इत्यर्थः । तथा पक्षान्तरे च-

**अर्धकोमलधो गश्च निश्च मध्यमः ।**
**एवं ग्रामो भवेद् यत्र स ग्रामो मध्यमः स्मृतः ।।**

यत्रार्धकोमलधैवतो गान्धारः पूर्णकोमलनिषादश्च मध्यमो भवति, तत्र यो ग्रामः स मध्यमग्रामः स्मृतः कथित इत्यर्थः । मध्यमग्रामे श्रुतिनियमो यथा **रत्नाकरे**–

**स्वोपान्ते श्रुतिसंस्थेऽस्मिन्मध्यमग्राम इष्यते ।**
**यद् वा धस्त्रिश्रुतिः षड्जे मध्यमे तु चतुःश्रुतिः ।।**

(सं० र०-अ० १, प्र० ४, श्लो० ३)।

**तदा तु मध्यमग्रामो विज्ञेयो मुनिसम्मतः** ।।इति।

तदुदाहरणं यथा–

म *|_* * *   प *|_* *   ध *—*   नि *|_* * *
स *|_* * *   ऋ *|_* *   ग *—*

**पक्षान्तरे च–**

स *|_* * *   ऋ *|_* *   ग *—*   म *|_* * *
प *|_* * *   ध *|_* *   नि *—*

▲ ध   ▲ नि

अथ मध्यमग्रामे मूर्च्छनालक्षणमाह सङ्गीतनारायणे मतङ्गः–

**अथोच्यते ज्ञापनार्थं मध्यमग्राममूर्च्छना ।**
**माद्गान्तं गाच्चर्षभान्तम् ऋषभात् सान्तमिष्यते ।**
**सान्न्यन्तं नेर्धैवतान्तं धात् पान्तं पान्मान्तकं तथेति ।।**

तदुदाहरणम्–

म प ध नि स ऋ ग च, ग म प ध नि स ऋ च, ध नि स ऋ ग म प च, प ध नि स ऋ ग म च ।

## अथ मध्यमग्रामशब्दाः

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| । एकमात्रा | I | I I | I I I |
| | म | म म | म प म |
| ।। द्विमात्रा | II | II II | II II II II |
| | म | म प | म प ध म |
| ।।। त्रिमात्रा | III | III III | III III III III III |
| | म | म ध | म प ध नि म |
| ॅ अर्द्धमात्रा | ॅ | ॅ ॅ | ॅ ॅ ॅ ॅ ॅ ॅ ॅ |
| | म | म नि | म प ध नि स म प |
| × पादमात्रा | × | × × | × × × × × × × × × |
| | म | म स | म प ध नि स ऋ म म म |
| ◡ पादार्धमात्रा | ◡ | ◡ ◡ | ◡ ◡ ◡ ◡ ◡ ◡ ◡ ◡ ◡ ◡ ◡ ◡ ◡ |
| | म | म ऋ | म प ध नि स ऋ ग म म म म म म |
| * पादपादमात्रा | * | * * | * * * * * * * * * * * * * * |
| | म | म ग | म प ध नि स ऋ ग म म म म म म म |

अन्येषु शब्देष्वेवं ज्ञेयमिति ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में मध्यम-ग्राम

जिस ग्राम में ऋषभ पञ्चम होता है, उसे मध्यम-ग्राम कहते हैं ।

**पक्षान्तर के अनुसार मध्यमग्राम**

जहाँ अर्धकोमल धैवत, गान्धार तथा पूर्णकोमल निषाद मध्यम हो जाता है, उसे मध्यमग्राम कहते हैं।

**रत्नाकर के अनुसार मध्यमग्राम में श्रुतियाँ**

मध्यम-निषाद-षड्ज में चार-चार, पञ्चम-ऋषभ में तीन-तीन तथा धैवत-गान्धार में दो-दो श्रुतियाँ होती हैं ।

**मुनिसम्मत पक्षान्तर के अनुसार श्रुतियाँ**

षड्जग्राम के अन्तर्गत धैवत स्वर में तीन श्रुतियाँ तथा मध्यमग्राम के धैवतस्वर में चार श्रुतियाँ होती हैं । जैसे–

म *|* * *   प *|* *   ध *—*   नि *|* * *

स *|* * *   ऋ *|* *   ग *—*

पक्षान्तर से–




**आचार्य मतङ्ग द्वारा सङ्गीतनारायण में प्रोक्त मध्यमग्रामगत-मूर्च्छनालक्षण**

मध्यम से गान्धार पर्यन्त, गान्धार से ऋषभपर्यन्त, ऋषभ से षड्ज तक, षड्ज से निषाद तक, निषाद से धैवत तक, धैवत से पञ्चम तक तथा पञ्चम से मध्यम तक मध्यमग्राम में मूर्च्छनाएँ होती हैं। जैसे–म प ध नि स ऋ ग च, ग म प ध नि स ऋ च, ध नि स ऋ ग म प च, प ध नि स ऋ ग म प च।

**विशेष**—तीन मूर्च्छनाओं के उदाहरण नहीं दिए गए हैं।

## मध्यमग्रामगत शब्द

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| । एकमात्रा | I | I I | I I I |
| | म | म म | म प म |
| ।। द्विमात्रा | II | II II | II II II II |
| | म | म प | म प ध म |
| ।।। त्रिमात्रा | III | III III | III III III III III |
| | म | म ध | म प ध नि म |
| ˘ अर्द्धमात्रा | ˘ | ˘ ˘ | ˘ ˘ ˘ ˘ ˘ ˘ ˘ |
| | म | म नि | म प ध नि स म प |
| × पादमात्रा | × | × × | × × × × × × × × × |
| | म | म स | म प ध नि स ऋ म म म |
| ◡ पादार्धमात्रा | ◡ | ◡ ◡ | ◡ ◡ ◡ ◡ ◡ ◡ ◡ ◡ ◡ ◡ ◡ ◡ ◡ |
| | म | म ऋ | म प ध नि स ऋ ग म म म म म म |
| * पादपादमात्रा | * | * * | * * * * * * * * * * * * * * |
| | म | म ग | म प ध नि स ऋ ग म म म म म म म |

अन्य शब्दों में भी इसी प्रकार जानना चाहिये।

## ७१. गान्धर्वे तृतीयग्रामः

**गः पञ्चमो भवेद् यत्र स ग्रामस्तृतीयः स्मृतः** (२/२/८)।

यत्र ग्रामे गान्धारः पञ्चमो भवति, स तृतीयग्रामः स्मृतः । अर्थाद् गान्धारग्रामः कथित इत्यर्थः । पक्षान्तरे च–

**यद्ग्रामनिर्णये पश्चात् कोमलाः षट् स्वराः स्थिताः ।**
**गान्धारः स समाख्यातस्तृतीयग्रामनिश्चये ।।**

यद्ग्रामस्य निर्णये निरूपणे षट् स्वराः कोमला भवन्ति, स गान्धारग्रामः समाख्यातः कथित इत्यर्थः । तथा च **दर्पणे**–

**ऋमयोः श्रुतिमेकैकां गान्धारश्चेत् समाश्रितः ।**
**प-श्रुतिन्धो निषादस्तु श्रुतिं सश्रुतिमाश्रितः ।**
**गान्धारग्राममाचष्टे तदा तं नारदो मुनिः ।।**

(सं० र०-अ० १, प्र० ४, श्लो०४-५) ।

तदुदाहरणं यथा–

ग *|* * *  म *|* *  प *—*  ध *|* * *

नि *|* * *  स *|* *  ऋ *—*

पक्षान्तरे च–

स ऋ ग म प ध नि ।

अथ गान्धारग्राममूर्च्छना–

**अथ निरूप्यते पश्चाद् गान्धारग्राममूर्च्छना ।**
**गान्धाराद् ऋषभान्तं तु ऋषभात् सान्तमिष्यते ।।**
**सान्यन्तं नेर्धैवतान्तं धैवतात् पान्तमेव च ।**
**पञ्चमान्मध्यमान्तं तु मध्यमाद् गान्तकं तथा ।**
**एवं क्रमेण जानीयाद् गान्धारग्राममूर्च्छनाम् ।।**

## अथ गान्धारग्रामशब्दाः

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| । एकमात्रा | I | I I | I I I I |
| | ग | ग म | ग म ग ग |
| ।। द्विमात्रा | II | II II | II II II II II |
| | ग | ग म | ग म प ग ग |
| ।।। त्रिमात्रा | III | III III | III III III III III III |
| | ग | ग प | ग म ध ग ग ग |

| | | | |
|---|---|---|---|
| ˘ अर्द्धमात्रा | ˘ | ˘ ˘ | ˘ ˘ ˘ ˘ ˘ ˘ ˘ ˘ |
| | ग | ग ध | ग म ध ध नि ग ग ग |
| × पादमात्रा | × | × × | × × × × × × × × × |
| | ग | ग नि | ग म ध ध नि ऋ ग ग ग |
| ◡ पादार्धमात्रा | ◡ | ◡◡◡◡◡◡◡◡ ◡ | ◡◡◡◡◡◡◡◡ |
| | ग | ग स ग म ध ध ध नि ऋ | ग ग ग ग ग ग |
| * पादपादमात्रा | * | * * | * * * * * * * * * * * * ** |
| | ग | ग ऋ | ग म ध ध नि ऋ स ग ग ग ग ग ग ग |

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में गान्धारग्राम

जिस ग्राम में गान्धारस्वर पञ्चम हो जाता है, उसे गान्धारग्राम कहते हैं। पक्षान्तर के अनुसार जिस ग्राम के निरूपण में छह स्वर कोमल हो जाते हैं, उसे गान्धारग्राम स्वीकार किया गया है। दर्पण में नारद के मतानुसार जब ऋषभ-मध्यम में एक-एक श्रुति होती है, धैवत स्वर जब पञ्चमश्रुति का एवं निषाद स्वर जब षड्जश्रुति का आश्रय लेता है, तब गान्धारग्राम होता है। जैसे–

ग * * * *   म * * *   प *—*   ध * * * *

नि * * * *   स * * *   ऋ *—*

पक्षान्तर में–

स   ऋ   ग   म   प   ध   नि ।

### सङ्गीतशास्त्र में गान्धारग्रामगत मूर्च्छनाएँ

गान्धार से ऋषभ तक, ऋषभ से षड्ज तक, षड्ज से निषाद तक, निषाद से धैवत तक, धैवत से पञ्चम तक, पञ्चम से मध्यम तक तथा मध्यम से गान्धार तक क्रम से गान्धारग्राम में मूर्च्छनाएँ होती हैं।

## गान्धारग्रामगत शब्द

| | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| । एकमात्रा | I | I I | I I I I |
| | ग | ग म | ग म ग ग |

| | | | |
|---|---|---|---|
| ।। द्विमात्रा | II | II II | II II II II II |
| | ग | ग म | ग म प ग ग |
| ।।। त्रिमात्रा | III | III III | III III III III III III |
| | ग | ग प | ग म ध ग ग ग |
| ˘ अर्द्धमात्रा | ˘ | ˘ ˘ | ˘ ˘ ˘ ˘ ˘ ˘ ˘ ˘ |
| | ग | ग ध | ग म ध ध नि ग ग ग |
| × पादमात्रा | × | × × | ×× × × × ◣ × × × × |
| | ग | ग नि | ग म ध ध नि ऋ ग ग ग |
| ◡ पादार्धमात्रा | ◡ | ◡◡ | ◡◡◣◡◣◡◡◡◡◣◡◡◡◡◡ |
| | ग | ग स | ग म ध ध ध नि ऋ ग ग ग ग ग ग |
| * पादपादमात्रा | * | * * | * * * ◣* * * *◣*◣****** |
| | ग | ग ऋ | ग म ध ध नि ऋ स ग ग ग ग ग ग ग |

अथ मूर्च्छनालक्षणम्—

## ७२. गान्धर्वे मूर्च्छनालक्षणम्

**अनुलोमविलोमक्रमेणैकविंशतिर्मूर्च्छना ग्रामत्रये सप्तसप्तविभागे च** (२/२/९)।

अनुलोमविलोमक्रमेण षड्जादिग्रामत्रये सप्तसप्तविभागरूपे चैकविंशतिर्मूर्च्छना भवन्ति। यथा षड्जग्रामे सप्त, मध्यमग्रामे सप्त, गान्धारग्रामे च सप्त। एवं क्रमेण त्रिसप्तके एकविंशतिर्मूर्च्छना ज्ञेयाः। तथा च दर्पणे–

**क्रमात् स्वराणां सप्तानामारोहश्चावरोहणम्।**
**मूर्च्छनेत्युच्यते ग्रामत्रये ताः सप्त सप्त च।**
**स्थानत्रयसमायोगे मूर्च्छनारम्भसम्भवः।।**

(द्र०, सं० र०-अ० १, प्र० ४, श्लो० ९)।

अनुलोम-विलोमम् आरोहणावरोहणम्। अर्थात् षड्जमारभ्य निषादपर्यन्तमारोहः, एवं निषादमारभ्य षड्जपर्यन्तमवरोहः।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में मूर्च्छना का लक्षण

अनुलोम-विलोम के क्रम से 'षड्ज-ऋषभ-गान्धार' इन तीन ग्रामों में सात-सात के भेद से २१ मूर्च्छनाएँ होती हैं। अर्थात् षड्जग्राम में सात, मध्यमग्राम में सात तथा गान्धारग्राम में सात मूर्च्छनाएँ मान्य हैं। दर्पण ग्रन्थ में कहा गया है कि सात स्वरों में क्रम से जो आरोह-अवरोह होता है, उसे ही मूर्च्छना कहते हैं। वे मूर्च्छनाएँ 'षड्ज-ऋषभ-गान्धार' में सात-सात होती हैं। षड्जस्वर से लेकर निषाद स्वर तक आरोह। निषादस्वर

से आरम्भ करके षड्जस्वर-पर्यन्त अवरोह ।

## ७३. गान्धर्वे स्वरग्रामता

**संज्ञाभिः श्रुतिभिश्च स्वरो ग्रामं प्रतिग्रामं सप्त सप्त मूर्च्छनाः** (२/२/१०) ।

संज्ञाभिः सह श्रुतिभिश्च स्वरो ग्रामत्वं प्राप्नोति प्रतिग्रामं सप्त सप्त मूर्च्छनाः । तथा च **सङ्गीतसुधाकरे** मतङ्गः—

**संज्ञाभिः श्रुतिभिश्चैव स्वरो *ग्रामत्वमागतः ।**
**सप्तैव मूर्च्छनाश्चात्र प्रतिग्रामं प्रकीर्तिताः ।।**

**।। इति वेदान्तदर्शन - व्याकरण - सङ्गीतादि - नानाशास्त्रविशारद-**
**ठाकुरोपाधिक - श्रीमद्धरकुमारज - सङ्गीतनायक -**
**श्रीमच्छौरीन्द्र - कृत - गान्धर्ववृत्तौ नाम्नि**
**गान्धर्वचतुष्टये द्वितीयः पादः**
**समाप्तः ।।**

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में स्वर की ग्रामता

संज्ञाओं तथा श्रुतियों के द्वारा ऋषभादि स्वर ही ग्राम हो जाते हैं और प्रत्येक ग्राम में ७-७ मूर्च्छनाएँ होती हैं । उक्त विवरण आचार्य मतङ्ग ने सङ्गीतसुधाकर में प्रस्तुत किया है ।

**नामचतुष्टयप्रकरण-द्वितीय पाद समाप्त ।**

●



---

* ग्रामः स्वरसमूहः स्यान्मूर्च्छनादेः समाश्रयः ।। (सं० र०–अ० १, प्र०४, श्लो० १)।

# अथ चतुष्टयवृत्तिः
## तृतीयः कारकपादः
## ७४. कलापे अव्ययेभ्यो विभक्तिलुक्

**अव्ययाच्च** (२/४/४) ।

*(दुर्गवृत्तिः)*

अव्ययमसङ्ख्यम् । अव्ययाच्च विभक्तीनां लुग् भवति । यथा–स्वः, प्रातः, च, वा, अहह, प्र, परा । एवमन्येऽपि । तथा चाह–

**सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।**
**वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ।।इति।**

[ **पाठा०** - पदसंज्ञार्थमिदम् ] ।

**[ हिन्दी-अनुवाद ] कलापव्याकरण में अव्ययों से विभक्तियों का लुक्**

लिङ्ग - वचन - विभक्ति से रहित को अव्यय कहते हैं । उस अव्ययसंज्ञक लिङ्ग से विभक्तियों का लुक् होता है । जैसे–स्वः, प्रातः, च, वा, अहह, प्र, परा । इसी प्रकार से अन्यत्र भी समझ लेना चाहिये । कहा गया है कि जो तीनों लिङ्गों में, सभी विभक्तियों में तथा सभी वचनों में परिवर्तित नहीं होता, उसे अव्यय कहते हैं ।

## ७४. गान्धर्वेऽव्ययेभ्यो विभक्तिलुक्

**एवमव्ययाच्च विभक्तेर्लुक्** (२/३/१) ।

एवंभूतादव्ययादव्ययस्वराद् विभक्तेर्मात्रायाश्च लुग् भवति । अर्थात् सङ्गीतस्वरव्यतिरिक्ते मात्रा कुत्रापि न तिष्ठेदिति तात्पर्यार्थः ।

**[ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में अव्यय से विभक्ति का लुक्**

उक्त प्रकार के अव्यय = अव्ययस्वर से विभक्ति = मात्रा का लुक् होता है । तात्पर्य यह है कि सङ्गीतस्वर के अतिरिक्त मात्रा अन्य कहीं पर भी स्थित नहीं रहती है ।

## टिप्पणी—५९

'स्वर् + सि, प्रातर् + सि, च + सि, वा + सि, अहह + सि' इस अवस्था में पाणिनि तथा शर्ववर्मा दोनों ही सि–आदि (पाणिनि सु-आदि) विभक्तियों का लुक् करके 'स्वः, प्रातः, च, वा, अहह' शब्दरूप सिद्ध करते हैं । पाणिनि का सूत्र है– "**अव्ययादाप्सुपः**" (अ० २/४/८२) ।

यहाँ यह ज्ञातव्य है कि पाणिनि ने अव्ययसंज्ञा के बोधार्थ ***"स्वरादिनिपातमव्ययम्"***

(अ० १/१/३७-४१) आदि ५ सूत्र बनाये हैं, जबकि कातन्त्रकार *'न व्येतीत्यव्ययम्'* इस व्युत्पत्ति के बल पर उसे अन्वर्थ मानकर अव्ययसंज्ञा के अवबोधार्थ सूत्र बनाने की आवश्यकता नहीं समझते। इस प्रकार संज्ञा-सूत्ररचना को छोड़कर प्रक्रिया की दृष्टि से उभयत्र साम्य ही कहा जा सकता है ।

सङ्गीतशास्त्र में स्वभावसिद्ध नादों की अव्ययसंज्ञा करके उनसे जो विभक्तियों = मात्राओं का लुक् दिखाया गया है, वह व्याकरणशास्त्रीय प्रक्रिया से पर्याप्त सादृश्य के बोध का प्रयत्न कहा जा सकता है ।

## ७५. कलापेऽव्ययशब्दाः

***शश्वत सम् द्राङ् मनागपि ।**
**स्वरादिः प्रादिरूर्यादिराविरादितद्धिताः ।**
**विभक्त्याभाः त्त्वामसन्ध्यक्षरान्तकाः कृतोऽव्ययाः ।।**

स्वः, जोषम्, प्र परा च हि वा, उरी, उररी, उदरी (ऊररी), आविः, प्रादुः, द्विधेत्यादि । विभक्तिप्रतिरूपकाः–अकस्मात्, अमुष्मिन्, अस्ति, भाति, कृत्वा, गन्तुम्, परिस्तरितवै, के, अवगाहे इत्यादयः[१] ।

## [ हिन्दी-अनुवाद ] कलाप में मान्य अव्यय

जैसे - शश्वत्, सम्, द्राक्, मनाक् आदि भी, स्वः- जोषम् आदि स्वरादि, प्र - परा - च - हि - वा - इत्यादि प्रादि, उरी-उररी-उदरी (ऊररी) ऊर्यादि, आविः-प्रादुः - द्विधा इत्यादि आविरादि, अकस्मात् -अमुष्मिन् - अस्ति- भाति इत्यादि विभक्तिप्रतिरूपक, क्त्वाप्रत्ययान्त-कृत्वा इत्यादि, मकारान्त-गन्तुम् इत्यादि तथा 'परिस्तरितवै - के, अवगाहे' इत्यादि सन्ध्यक्षरान्तक कृत्प्रत्यय वाले शब्द अव्यय माने जाते हैं ।

## ७५. गान्धर्वेऽव्ययशब्दाः

**मनुष्यादिभिस्सङ्गीताः साधारणाश्चाव्ययाः** (२/३/१) ।

असङ्गीताः सङ्गीतस्वरभिन्ना मनुष्यादिभिर्मनुष्यपशुपक्षिप्रभृतिभिरुच्चारिताः साधारणाः शब्दाः । अर्थात् स्वभावसम्भूता ये नादास्ते अव्यया भवन्ति । तथा चाह–

---

*. विद्वत्कुलपङ्कजसवित्रा मत्पूर्वपुरुषमहामहोपाध्यायश्रीश्रीमत्पुरुषोत्तमविद्यावागीशभट्टाचार्येण विरचितप्रयोगरत्नमालाभिधेयव्याकरणस्थाव्ययप्रकरणादुद्धृतमेतत् ।

१. ग्रन्थकार ने यह विषय अपने पूर्वज महामहोपाध्याय पुरुषोत्तम विद्यावागीश द्वारा रचित प्रयोगरत्नमाला व्याकरण के अव्यय-प्रकरण से लिया है ।

**गीते वाद्ये तथा नृत्ये त्रैविध्ये सङ्गतेऽपि च ।**
**साधारणं नरादीनां[१] यन्न युक्तं तदव्ययम् ।। इति।**

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में अव्यय

मनुष्य - पशु - पक्षी आदि के द्वारा उच्चरित सङ्गीतस्वर से भिन्न जो साधारण शब्द अर्थात् जो स्वभावसिद्ध नाद हैं, उनकी अव्ययसंज्ञा होती है । कहा गया है कि–गीत-वाद्य-नृत्य[२] इन तीनों में पृथक् पृथक् तथा समन्वितरूप में मनुष्य आदि की साधारण ध्वनि का जहाँ संयोग नहीं होता है, उसे अव्यय कहते हैं ।

## ७६. कलापे विंशतिरुपसर्गाः

**प्रादयस्तत्र–**

**प्र-पराप-समन्वव-निर् - दुरभि - व्यधि - सूदति - नि - प्रति - पर्यपयः ।**
**उप - आङिति विंशतिरेव सखे ! उपसर्गविधिः कथितः कविना ।।**

(द्र०-कात० वि० प० २/४/४) ।

तद् यथा–'प्र-परा-अप-सम् -अनु-अव-निर्-दुर्-अभि-वि-अधि-सु-उद्-अति-नि-प्रति-परि-अपि-उप--आङ्' इति । अत्र तु द्वाविंशतिरुपसर्गा इति पाणिनिः[३] ।

## [ हिन्दी-अनुवाद ] कलापव्याकरण में २० उपसर्ग

प्र - परा - अप - सम् - अनु - अव - निर् - दुर् - अभि - वि - अधि - सु -उद् - अति - नि - प्रति - परि-अपि - उप - आङ् । ये बीस उपसर्ग पूर्वाचार्य द्वारा मान्य हैं । पाणिनि द्वारा "निरः कुषः, सुदुरोरधिकरणे" में 'निर् - दुर्' दो उपसर्ग माने गये हैं, इनके अतिरिक्त 'निस् - दुस्' उपसर्ग भी पाणिनि मानते हैं । अतः पाणिनीय व्याकरण में २२ उपसर्ग स्वीकार किए गए हैं । सङ्गीतशास्त्र में भी उपसर्गों की संख्या २२ मानी गई है । (इसका समाधान विद्वानों के अधीन है–तदर्थ ग्रन्थकार की टिप्पणी द्रष्टव्य है ।)

---

१. नृत्येऽपि नरादीनां साधारणध्वनेरसंयोगो भवतीति यदनेन प्रतिपादितं तत् स्पष्टार्थमिति भावः ।

२. नृत्य में भी मनुष्य आदि की साधारणध्वनि के संयोग का जो अभाव यहाँ बताया गया है, वह स्पष्टता के उद्देश्य से समझना चाहिए ।

३. कलापोक्तविंशत्युपसर्गैः सह गान्धर्वोक्तद्वाविंशत्युपसर्गसमन्वये सङ्ख्यागतविरोधापत्तिमाशङ्क्याह- अत्र तु द्वाविंशतिरुपसर्गा इति । तथा च पाणिनिमते 'निस्, दुस्' इत्येतावेवोपसर्गौ । महाभाष्यवामनवृत्तिमनोरमाहरदत्तादिटीकामते तु 'निर्-दुर्' इत्येतावपि रेफान्तौ पृथग् उपसर्गौ स्तः–"निरः कुषः" (अ० ६/२/४६) इति पाणिनिसूत्रात्, "सुदुरोरधिकरणे" इति भाष्य-लिखनाच्च (ग्रन्थकारीया टिप्पणी) ।

## ७६. गान्धर्वे द्वाविंशतिरुपसर्गाः

**सङ्गीते द्वाविंशतिरुपसर्गाः** (२/३/२) ।

सङ्गीते सङ्गीतशास्त्रमते तु द्वाविंशतिश्रुतयः सर्वा अप्युपसर्गसंज्ञा भवन्ति । यथाहि **रत्नाकरे**–

**तीव्रा - कुमुद्वती - मन्दा - च्छन्दोवत्यस्तु षड्जगाः ।**
**दयावती व्यञ्जली (रञ्जनी) च रतिका चर्षभे स्थिताः ।।**
**रौद्री क्रोधी च गान्धारे, वज्रिकाथ प्रसारिणी ।**
**प्रीतिश्च मार्जनी चैव श्रुतयो मध्यमे स्थिताः ।।**
**क्षिती रक्ता च सन्दीपन्यालापन्यपि पञ्चमे ।**
**मदन्ती रोहिणी रम्येत्येतास्तिस्त्रस्तु धैवते ।**
**उग्रा च क्षोभिणीति द्वे निषादे कथिता बुधैः ।।**

(सं० र०-अ० १, प्र०३, श्लो० ३५-३८) ।

तद् यथा–१. तीव्रा, २. कुमुद्वती, ३. मन्दा, ४. छन्दोवती, ५. दयावती, ६. व्यञ्जली, ७. रतिका, ८. रौद्री, ९. क्रोधी, १०. वज्रिका, ११. प्रसारिणी, १२. प्रीतिः, १३. मार्जनी, १४. क्षितिः, १५. रक्ता, १६. सान्दीपनी, १७. आलापनी, १८. मदन्ती, १९. रोहिणी, २०. रम्या, २१. उग्रा, २२. क्षोभिणी इति ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में २२ उपसर्ग

सङ्गीतशास्त्र में जो २२ श्रुतियाँ कही गई हैं, उन सभी की उपसर्गसंज्ञा होती है । षड्ज स्वर में 'तीव्रा - कुमुद्वती - मन्दा - छन्दोवती' ये चार श्रुतियाँ, ऋषभस्वर में 'दयावती - व्यञ्जली – रतिका' ये तीन श्रुतियाँ, गान्धारस्वर में 'रौद्री-क्रोधी' ये दो श्रुतियाँ, मध्यमस्वर में 'वज्रिका - प्रसारिणी - प्रीति - मार्जनी' ये चार श्रुतियाँ, पञ्चमस्वर में 'क्षिति-रक्ता-सन्दीपनी–आलापनी' ये चार श्रुतियाँ, धैवतस्वर में 'मदन्ती-रोहिणी-रम्या' ये तीन श्रुतियाँ तथा निषादस्वर में 'उग्रा–क्षोभिणी' ये दो श्रुतियाँ विद्वानों ने मानी हैं । स्पष्टता के लिए इन सभी को एकत्र सारणी में इस प्रकार जाना जा सकता है–

| क्र.स. | स्वर | श्रुतियाँ | | | | संख्या |
|---|---|---|---|---|---|---|
| | | १ | २ | ३ | ४ | |
| १. | षड्ज | तीव्रा | कुमुद्वती | मन्दा | छन्दोवती | |
| २. | ऋषभ | दयावती | व्यञ्जली | रतिका | — | समग्र श्रुतियाँ- |
| ३. | गान्धार | रौद्री | क्रोधी | — | | २२ |
| ४. | मध्यम | वज्रिका | प्रसारिणी | प्रीति | मार्जनी | |
| ५. | पञ्चम | क्षिति | रक्ता | सन्दीपनी | आलापनी | |
| ६. | धैवत | मदन्ती | रोहिणी | रम्या | — | |
| ७. | निषाद | उग्रा | क्षोभिणी | — | — | |

## टिप्पणी - ६०

पुरुषोत्तमदेवकृत उपसर्गसूत्रों के अनुसार कलापव्याकरण में २० उपसर्ग माने गए हैं—'प्र-परा-अप-सम् - अनु- अव-निर्-दुर् - अभि - वि- अधि - सु - उद् - अति - नि- प्रति - परि - अपि - उप - आङ्' । 'निस् - दुस्' को सम्मिलित कर लेने पर २२ सङ्ख्या हो जाती है । कुछ कार्यों के लिए 'अच्छ, श्रत्, अन्तः' को भी उपसर्ग माने जाने से २५ संख्या हो सकती है । अव्ययों में जो दो प्रकार के शब्द होते हैं, उनमें से एक प्रकार के शब्द **उपसर्ग** कहे जाते हैं । इनका सम्बन्ध धातुओं से पूर्व किया जाता है । अर्थविशेष में कुछ उपसर्गों की 'गति—कर्मप्रवचनीय' संज्ञाएँ भी की जाती हैं । उपसर्गों की पदसंज्ञा होने पर भी उनका स्वतन्त्ररूप में प्रयोग नहीं होता है ।

**पुरुषोत्तमदेवकृत २० उपसर्ग अर्थनिर्देश के साथ**

१. प्र ग्रन्थारम्भोत्कर्षसर्वतोभावप्राथम्यख्यात्युत्पत्तिव्यवहारेषु।
२. परा भङ्गानादरप्रत्यावृत्तिन्यग्भावादिषु ।
३. अप अनादरभ्रंशासाकल्यवैरूप्यत्यागनञर्थेषु ।
४. सम् प्रकर्षश्लेषनैरन्तर्यौचित्याभिमुख्येषु ।
५. अनु पश्चात्सादृश्यलक्षणवीप्सेत्त्थम्भावभागहीनसहार्थसामीप्यदीर्घपुनरर्थेषु ।
६. अव निश्चयासाकल्यानादरेषु ।
७. निर् अत्यर्थनिषेधनिश्चयबहिष्करणेषु ।
८. दुर् निषेधकष्टनिन्दावक्षेपणेषु ।
९. अभि समन्तादुभयार्थलक्षणवीप्सेत्थम्भावधर्षणेषु ।
१०. वि विशेषवैरूप्यनञर्थगतिदानेषु ।
११. अधि उपरिभावे ।
१२. सु पूजनायासातिशायनेषु ।
१३. उद् ऊर्ध्वोत्कर्षप्राकट्यनैकट्येषु ।
१४. अति अतिशयक्रान्तिपूजासंभावनेषु ।
१५. नि निश्चयनिषेधयोः ।
१६. प्रति लक्षणव्यावृत्तिप्रसक्तीत्त्थम्भावत्यागप्रत्यर्पणसादृश्यविरोधवीप्सासमाधिषु ।
१७. परि सर्वतोभावातिशयवीप्सेत्त्थम्भावचिह्नभागत्यागनियमेषु ।
१८. अपि आवरणसंभावननिन्दानुज्ञाल्पत्वसमुच्चयेषु ।
१९. उप अनुगतिपश्चाद्भावानुकम्पाधिक्यहीनसामीप्यप्राथम्येषु ।

२०. आङ् समन्ताद्ग्रहणप्रत्यवृत्तीषदर्थमर्यादाव्याप्तिषु ।

सङ्गीतशास्त्र में २२ श्रुतियों की उपसर्गसंज्ञा का सादृश्य व्याकरणशास्त्रीय २२ उपसर्गों से कहा जा सकता है ।

**अथ शुद्ध-काकलीविवरणम्**

## ७७. गान्धर्वे शुद्धस्वराः

**यस्मिन् स्वरे ये चोक्तास्ते शुद्धाः** (२/३/३) ।

यस्मिन् यस्मिन् स्वरे ये ये (याः याः) श्रुतयश्चोक्ताः कथितास्तत्तत्श्रुतिविशिष्टाः स्वराः शुद्धस्वरा भवन्ति । यथा–

स * * * *   ऋ * * *   ग *—*   म * * * *

प * * * *   ध * * *   नि *—*

**एते शुद्धस्वराः ।**

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में शुद्ध स्वर

जिस जिस स्वर में जो जो श्रुतियाँ कही गई हैं, उन उन श्रुतियों से विशिष्ट स्वरों को आचार्य शुद्ध स्वर मानते हैं । जैसे–

स * * * *   ऋ * * *   ग *—*   म * * * *

प * * * *   ध * * *   नि *—*   ये शुद्ध स्वर हैं ।

## ७८. गान्धर्वे विकृतस्वराः

**शुद्धानां विभागे विकृता द्वादश** (२/३/४) ।

शुद्धस्वराणां श्रुतिविभागे कृते सति द्वादश स्वराः सर्वे विकृता भवन्ति । यथा–

स ऋ ऋ ग ग म म प ध ध नि नि

तथा च **दर्पणे**–शुद्धाशुद्धादिभेदेन विकृता द्वादशोदिता इत्यादि ।

विशेषतः **सुधाकरे**–यस्तु काकशब्दवन्निष्ठुरः प्रतीयते स काकली, येन महता क्लेशेन

तारमन्द्रादिभिः सूक्ष्मस्वरो जायते । सूक्ष्मः कृशः, अर्थाद् गर्दभादिध्वनिवन्नीरसो भग्नस्वर इति भावः । विशेषतः उच्चारणव्यतिक्रमादसम्यगह्रस्वदीर्घोच्चारणं काकली ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में विकृतस्वर

शुद्धस्वरों की श्रुतियों का विभाग करने पर सभी १२ स्वर विकृत हो जाते हैं । जैसे–

स ऋ ऋ ग ग म म प ध ध नि नि

दर्पण के अनुसार शुद्ध आदि के भेद से शुद्ध स्वर ही विकृत हो जाते हैं, जिनकी संख्या १२ है । आचार्य सुधाकर ने विशेष रूप में कहा है कि जो कौए के शब्द की तरह कठोर मालूम पड़ता है, वह काकली स्वर है, जिसमें महान् क्लेशपूर्वक तार-मन्द्र आदि के द्वारा यह सूक्ष्मता को प्राप्त कर पाता है । सूक्ष्म = कृश । अर्थात् गर्दभ आदि की ध्वनि के सदृश जो नीरस और भग्न स्वर होता है, उसे काकली कहते हैं । विशेषतः उच्चारण के व्यतिक्रम से अनुचितरूप में जो ह्रस्व-दीर्घ का उच्चारण होता है, वह काकली स्वर है ।

## ७९. गान्धर्वे कोमलस्वरौ

**विभागेन दातृगृहीत्रोः प्रकृतिनाशात्तदुभौ** (२/३/५) ।

विभागेन श्रुतिविभागक्रमेण श्रुतिदातृग्रहीत्रोः स्वकीयप्रकृतिविनाशात्तदुभौ दाताग्रहीतारौ विकृतौ अर्थात् कोमलौ भवतः ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में दो कोमल स्वर

श्रुतियों का विभाग करने पर उसके 'दाता-ग्रहीता' में अपने स्वभाव के विनाश से वे दोनों 'दाता-ग्रहीता' विकृत अर्थात् कोमल हो जाते हैं ।

## ८०. गान्धर्वे ऋषभः कोमलस्वरः

**षड्जादृः कोमलः** (२/३/६) ।

षड्जात् षड्जस्वरात् श्रुतिग्रहणाद् ऋः ऋषभः कोमलस्वरो भवति । यथा - कोमल-ऋषभः (ऋ) ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में ऋषभ स्वर की कोमलता

षड्ज स्वर की श्रुति का ग्रहण करने से ऋषभ स्वर कोमल होता है । कोमल ऋषभ-ऋ ।

## ८१. गान्धर्वे गान्धारः कोमलस्वरः

**ऋषभाद् गः** (२/३/७) ।

ऋषभाद् ऋषभस्वरात् श्रुतिग्रहणाद् गः गान्धारः कोमलस्वरो भवति । यथा– कोमलगान्धारः (ग) ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में गान्धार की कोमलता

ऋषभस्वर से श्रुतिग्रहण करने पर गान्धार स्वर कोमल होता है । जैसे–कोमल गान्धार–ग ।

## ८२. गान्धर्वे तीव्रमध्यमस्वरः

**पञ्चमात्तीव्रमध्यमः** (२/३/८) ।

पञ्चमात् पञ्चमस्वरात् श्रुतिग्रहणान्मध्यमस्तीव्रमध्यमस्वरो भवति । यथा–तीव्रमध्यमः (म) ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में तीव्र मध्यमस्वर

पञ्चमस्वर से श्रुतियों का ग्रहण करने पर मध्यम स्वर तीव्र होता है । जैसे तीव्र-मध्यम म ।

## ८३. गान्धर्वे धैवतः कोमलस्वरः

**पञ्चमाद् धः** (२/३/९) ।

पञ्चमात् पञ्चमस्वरात् श्रुतिग्रहणाद् धो धैवतः कोमलस्वरो भवति । यथा–कोमलधैवतः (ध) ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में धैवतस्वर की कोमलता

पञ्चम स्वर से श्रुति का ग्रहण करने पर धैवत स्वर कोमल होता है । जैसे–कोमल धैवत-ध ।

## ८४. गान्धर्वे निषादः कोमलस्वरः

**धैवतान्निः** (२/३/१०) ।

धैवताद् धैवतस्वरात् श्रुतिग्रहणात् निर्निषादः कोमलस्वरो भवति । यथा–कोमलनिषादः (नि) ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में निषाद स्वर की कोमलता

धैवत स्वर से श्रुतियों का ग्रहण करने पर निषाद स्वर कोमल होता है । जैसे–कोमलनिषाद–नि ।

●

## अथ षट् कारकाणि

### ८५. गान्धर्वे कारकसंज्ञा

**गन्यौ त्यक्त्वा श्रुतिभिरन्येऽप्यपादानादिभेदेन षट् कारकाणि** (२/३/११)।

गान्धारनिषादौ त्यक्त्वा श्रुतिभिः सह अन्येऽपि स्वरा अपादानादिभेदेन षट् कारकसंज्ञा भवन्ति । यथा–अपादानं सम्प्रदानम् अधिकरणं करणं कर्तृ कर्म च ।

### [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में छह कारक

गान्धार-निषाद स्वरों को छोड़कर श्रुतियों के साथ अन्य स्वरों की कारक संज्ञा होती है । ये कारक अपादान आदि के भेद से छह होते हैं । जैसे–अपादान, सम्प्रदान, अधिकरण, करण, कर्ता और कर्म ।

### टिप्पणी-६१

संस्कृतव्याकरण में कारक एक ऐसा विषय है, जो किसी भी प्रकार हटाया नहीं जा सकता । कुछ पूर्वाचार्य कारकप्रकरण के लिये 'विभक्त्यर्थ' शब्द का प्रयोग करते रहे हैं । परन्तु अपादान आदि भेदों की व्याख्या के समय कारक का उल्लेख करना अपरिहार्य होता है । दूसरा कारण यह है कि संस्कृतभाषा का प्रयोग करने के लिये जिन विषयों का परिज्ञान करना अपरिहार्य होता है, उनमें कारक सबसे पहले गिना जाता है—**'प्रयोगमिच्छता ज्ञातुं ज्ञेयं कारकमादितः'** । ६ प्रकार का कारक २३ भेदों वाला भी होता है । कारक की अपरिहार्यता के कारण ही सूत्रपठित 'तत्' शब्द से व्याख्याकार कारक का ही ग्रहण करते हैं । जैसे—"यतोऽपैति भयमादत्ते वा तदपादानम्" (कलाप० २/४/८) । दुर्गवृत्ति में व्याख्या की गई है—'यस्मादपैति, यस्माद् भयं भवति, यस्मादादत्ते वा, तत् कारकम् अपादानसंज्ञम्भवति' । यह ज्ञातव्य है कि कातन्त्रकार ने साक्षात् कारकशब्द का पाठ सूत्र में नहीं किया है ।

सङ्गीतशास्त्र में होने वाली स्वरों की कारक संज्ञा व्याकरणशास्त्रीय मान्यता से सादृश्य सूचित करती है ।

### ८६. कलापेऽपादानसंज्ञा

*(दुर्गवृत्तिः)*

**यतोऽपैति भयमादत्ते वा तदपादानम्** (२/४/८) ।

यस्मादपैति, यस्माद् भयं भवति, यस्मादादत्ते वा, तत् कारकमपादानसंज्ञं भवति । 'वृक्षात् पर्णं पतति, व्याघ्राद् बिभेति' इत्यादि [ **पाठा०**-चौरादुद्विजते, उपाध्यायादधीते, उपाध्यायादागमयति । यत इत्यवधिमात्रार्थम् । तेन धावतोऽश्वात् पतितः । तथा अधर्माज्जुगुप्सते, अधर्माद् विरमति, धर्मात् प्रमाद्यति । अध्ययनात्

पराजयते, उपाध्यायादन्तर्धत्ते, शृङ्गाच्छरो जायते, हिमवतो गङ्गा प्रभवति । आसनात् प्रेक्षते, प्रासादात् प्रेक्षते । कुतो भवान् ? पाटलिपुत्रात् ] ।

## [ हिन्दी-अनुवाद ] कलापव्याकरण में अपादानसंज्ञा

जिससे कोई वस्तु पृथक् होती है, जिससे भय होता है और जिससे ग्रहण करता है, उस कारक की अपादान संज्ञा होती है । जैसे–'वृक्षात् पर्णं पतति, व्याघ्राद् बिभेति' इत्यादि ।

## ८६. गान्धर्वेऽपादानसंज्ञा

**यस्मात् श्रुतिं विश्लेषयति यदर्थेन तदपादानम्** (२/३/१२) ।

यस्मात् स्वराद् यदर्थेन श्रुतिं विश्लेषयति तत् कारकमपादानसंज्ञं भवति । यथा–'षड्जात् श्रुतिं विश्लेषयति ऋषभार्थेन' इत्यादि ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में अपादानसंज्ञा

जिस स्वर से दूसरे स्वर के लिये श्रुति को पृथक् किया जाता है, उस कारक की अपादान संज्ञा होती है । जैसे–'षड्जात् श्रुतिं विश्लेषयति ऋषभार्थेन' इत्यादि । ऋषभ स्वर के लिये षड्ज स्वर से श्रुति को पृथक् करता है ।

## टिप्पणी-६२

'अपाय, भयहेतु, आख्याता, प्रभव' आदि की अपादानसंज्ञा पाणिनि ने आठ सूत्रों द्वारा की है–"**ध्रुवमपायेऽपादानम्, भीत्रार्थानां भयहेतुः, पराजेरसोढः, वारणार्थानामीप्सितः, अन्तर्द्धौ येनादर्शनमिच्छति, आख्यातोपयोगे, जनिकर्तुः प्रकृतिः, भुवः प्रभवः**" (अ० १/४/२४-३१) । कातन्त्रकार ने दो ही सूत्र बनाये हैं । ज्ञातव्य है कि महाभाष्यकार पतञ्जलि आदि ने पाणिनीय प्रथम सूत्र के अतिरिक्त ७ सूत्रों को प्रपञ्चार्थ माना है । वस्तुतः अपाय को बाह्य और बौद्ध मान लेने पर अन्य सूत्र अनावश्यक ही कहे जा सकते हैं । कातन्त्र के व्याख्याकारों ने भी उन्हें आवश्यक नहीं माना है । कातन्त्रविस्तरकार का यह अभिमत ध्यातव्य है–

**प्रत्याख्यातुमिहाख्यातमिति तन्त्रान्तरोदितम् ।**
**स्वीकर्तुमथवाऽस्माकं पक्षपातो न विद्यते ।।**
किञ्च, **तन्त्रान्तरप्रणीतानां सूत्राणां परमाग्रहात् ।**
**प्रत्याख्यानेन यत्नस्य द्वैगुण्यमुपजायते ।।**

(द्र०-मञ्जूषापत्रिका-व० १२, अं० ९)।

अपादान के तीन भेद किये जाते हैं–

१. निर्दिष्टविषय-ग्रामाद् आगच्छति ।

२. उपात्तविषय-बलाहकाद् विद्योतते विद्युत् ।

३. अपेक्षितक्रिय-पाटलिपुत्रात् ।

इसे महासंज्ञा होने के कारण अन्वर्थ माना जाता है–'**अपकृष्य बुद्ध्या पृथक्कृत्य वस्तु आदीयते बुद्ध्या गृह्यते**' । नाट्यशास्त्र में उल्लेख प्राप्त होने से इसका पूर्वाचार्यसंमत होना सिद्ध होता है–

**तत् प्राहुः सप्तविधं पदकारकसंयुतं प्रथितसाध्यम् ।**
**निर्देशः सम्प्रदानापादानप्रभृतिसंज्ञाभिः ।।**

(ना० शा० १४/२३)।

चान्द्र आदि अर्वाचीन व्याकरणों में एतदर्थ प्राप्त वचन इस प्रकार हैं–

**चान्द्रव्याकरण**–अवधेः पञ्चमी (२/१/८१) ।

**जैनेन्द्रव्याकरण**–ध्यपाये ध्रुवमपादानम् (१/२/११०) ।

**हैमव्याकरण**–अपायेऽवधिरपादानम् (२/२/२९) ।

**मुग्धबोधव्याकरण**–यतोऽपायभीजुगुप्सापराजयप्रमादादानभूत्राणविरामान्तर्द्धिवारणं जंपी (सूत्र २९९) ।

**अग्निपुराण**– अपादानं यतोऽपैति आदत्ते च भयं तथा ।
अपादाने पञ्चमी स्यात् ।
अपादानं द्विधा प्रोक्तम् । (३५०/२७; ३५३/११) ।

**नारदपुराण**– **पञ्चमी स्याद् ङसिभ्यांभ्यो ह्यपादाने च कारके ।**
**यतोऽपैति समादत्ते अपदत्ते च यं यतः ।।**
**.........................रक्षार्थानां प्रयोगतः ।**
**ईप्सितं चानीप्सितं यत् तदपादानकं स्मृतम्** ।। (५२/७,९) ।

**शब्दशक्तिप्रकाशिका**–

**क्रियाधर्मिणि यः स्वार्थः पञ्चम्या विग्रहस्थया ।**
**अनुभाव्यः कारकं तदपादानत्वसंज्ञकम्** ।। (का० ६९) ।

'अपादान-सम्प्रदान' शब्दों में 'कृ' धातु का प्रयोग न होने के कारण तथा दूसरे से अपाय होने-दूसरे को दान किये जाने के कारण भी इनके कारक होने में सन्देह किया जाता है, परन्तु महाभाष्यकारादि ने विस्तार से विचार करते हुये इनका कारकत्व होना अक्षुण्ण रूप में स्वीकार किया है (द्र०, म० भा० तथा म० भा० प्र० १/४/२३) । पाणिनि ने जिसकी अपादानसंज्ञा करने के लिये "**भीत्रार्थानां भयहेतुः, वारणार्थानामीप्सितः**" (अ० १/४/२५, २७) ये दो सूत्र बनाए हैं, उनके लिए कातन्त्र में एक ही प्रकृत सूत्र प्राप्त है । दोनों के उदाहरणों में भिन्नता द्रष्टव्य है ।

जैसे–पाणिनि=चौरेभ्यो रक्षति, चौरेभ्यस्त्रायते । यवेभ्यो गां वारयति । शर्ववर्मा- अहिभ्य आत्मानं रक्षति, यवेभ्यो गां रक्षति । शालिभ्यः शुकान् वारयति, कूपादन्धं वारयति ।

सङ्गीतशास्त्र में जिस स्वर से श्रुति को पृथक् किया जाता है, उसकी अपादान संज्ञा करके व्याकरणशास्त्र से पूर्ण साम्य दिखाया गया है ।

## ८७. कलापे सम्प्रदानसंज्ञा

**यस्मै दित्सा रोचते धारयते वा तत् सम्प्रदानम्** (२/४/१०) ।

***(दुर्गवृत्तिः)***

यस्मै दातुमिच्छा, यस्मै रोचते, यस्मै धारयते वा, तत् कारकं सम्प्रदानसंज्ञम्भवति । यथा-'ब्राह्मणाय गां ददाति, देवदत्ताय रोचते मोदकः' इत्यादि । [ **पाठा०** –यज्ञदत्ताय स्वदते, विष्णुमित्राय गां धारयते । कथं छात्राय श्लाघते, छात्राय ह्नुते, छात्राय तिष्ठते कुमारी, छात्राय शपते, पुष्पेभ्यः स्पृहयति, छात्राय राध्यति, छात्रायेक्षते, छात्राय प्रतिशृणोति, छात्राय आशृणोतीति ? **तादर्थ्यचतुर्थ्या सिद्धम्** । छात्राय क्रुध्यति, मित्राय द्रुह्यति, मित्रायेर्ष्यते, मित्रायासूयति । **यस्मै कुप्यतीति वक्तव्यम्** । दातुमिच्छेति किम् ? राज्ञो दण्डं ददाति । सम्प्रदानप्रदेशाः–"सम्प्रदाने चतुर्थी" (२/४/१९) इत्येवमादयः ] ।

## [ हिन्दी-अनुवाद ] कलापव्याकरण में सम्प्रदानसंज्ञा

जिसको कुछ देने की इच्छा होती है, जिसको रुचिकर होता है या जिसके लिये कुछ धारण किया जाता है, उस कारक की सम्प्रदान संज्ञा होती है । जैसे– ब्राह्मणाय गां ददाति (ब्राह्मण को गाय देता है), देवदत्ताय रोचते मोदकः (देवदत्त को मोदक अच्छा लगता है) इत्यादि ।

## ८७. गान्धर्वे सम्प्रदानसंज्ञा

**यस्मै श्रुतिं ददाति यदर्थेन तत् सम्प्रदानम्** (२/३/१३) ।

यस्मै स्वराय यदर्थेन श्रुतिं ददाति तत् कारकं सम्प्रदानसंज्ञम्भवति । यथा– 'ऋषभो गान्धाराय श्रुतिं ददाति' इत्यादि ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में सम्प्रदानसंज्ञा

जिस स्वर को किसी प्रयोजन से श्रुति दी जाती है, उस कारक की सम्प्रदान संज्ञा होती है । जैसे ऋषभ स्वर गान्धार स्वर को श्रुति देता है इत्यादि ।

## टिप्पणी- ६३

जिसे देने की इच्छा होती है, जिसे कोई वस्तु रुचिकर लगती है तथा जिसकी वस्तु (स्वत्व) अपने पास ऋण के रूप में रखी जाती है, उसकी सम्प्रदानसंज्ञा

पाणिनि तथा शर्ववर्मा दोनों ने ही की है । पाणिनि ने इसके लिये **"कर्मणा यमभिप्रैति स सम्प्रदानम्, रुच्यर्थानां प्रीयमाणः, श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः, धारेरुत्तमर्णः, स्पृहेरीप्सितः, क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः, राधीक्ष्योर्यस्य विप्रश्नः, प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता, अनुप्रतिगृणश्च"** (अ० १/४/३२-३७, ३९-४१) ९ सूत्र बनाये हैं और विविध अर्थों का स्पष्टरूप में तथा विस्तार से निर्देश किया है । कातन्त्रकार शेष अर्थों का ग्रहण व्याख्याबल से कर लेते हैं । पाणिनि के प्रथम सूत्र में लोकव्यवहारप्रसिद्ध संप्रदान व्याख्यात है, शेष सूत्रों में प्रायः शास्त्रीय सम्प्रदान । सम्प्रदान तीन प्रकार का होता है । जैसे–

१. **अनिराकरण**-सूर्यायार्घ्यं ददाति ।

२. **प्रेरणा**-विप्राय गां ददाति ।

३. **अनुमति**-उपाध्यायाय गां ददाति ।

**"निर्देशः सम्प्रदानापादानप्रभृतिसंज्ञाभिः"** (ना०शा० १४/२३) इस वचन में 'सम्प्रदान' शब्द का उल्लेख होने के कारण इसकी प्राचीनता तथा प्रामाणिकता सिद्ध है । इस संज्ञा की लोकाभिधानपरता तथा अन्वर्थता के विषय में कातन्त्रपरिशिष्टकार का यह वचन द्रष्टव्य है–

**सम्प्रदानादयः संज्ञा रुचिधारिविवर्जिताः ।**
**लोकोपचारात् संसिद्धाः सुखबोधाय दर्शिताः ।।**

(कात० वृ० टी० २/४/१६) ।

अर्वाचीन शाब्दिकाचार्यों ने भी इस संज्ञा का प्रयोग किया है–

**जैनेन्द्रव्याकरण**–कर्मणोपेयः सम्प्रदानम्, धारेरुत्तमर्णः, परिक्रयणम् (१/२/१११-१३) ।

**शाकटायनव्याकरण**–कर्मणोऽभिप्रेयः सम्प्रदानम् (१/२/१२६) ।

**मुग्धबोधव्याकरण**–यस्मै दित्सासूयाक्रोधेर्ष्यारुचिद्रोहस्थाह्नुङ्स्पृहिशपाधीक्षाप्रति-श्रुप्रत्यनुगृधार्यर्था भं ची तादर्थ्ये च (सूत्र २९४) ।

**हैमव्याकरण**–कर्माभिप्रेयः सम्प्रदानम् (२/२/२५) ।

**अग्निपुराण**–सम्प्रदाने चतुर्थ्यपि, यस्मै दित्सा धारयते सम्प्रदानं तदीरितम् । सम्प्रदानं त्रिधा प्रोक्तम् (३५०/२६, ३५३/९) ।

**नारदपुराण**– **ङेभ्यांभ्यसश्चतुर्थी स्यात् सम्प्रदाने च कारके ।**
**यस्मै दित्सा धारयेद् वै रोचते सम्प्रदानकम् ।।** (५२/६)।

**शब्दशक्तिप्रकाशिका**– **गत्यादिभिन्ने धात्वर्थे चतुर्थ्या विग्रहस्थया ।**
**यः स्वार्थो बोधनीयस्तत् संप्रदानत्वमीरितम् ।।**

(का०७०)।

सङ्गीतशास्त्र में जिस स्वर को श्रुति दी जाती है, उसकी सम्प्रदानसंज्ञा व्याकरणशास्त्र से पर्याप्त समानता को सूचित करती है ।

## ८८. कलापेऽधिकरणसंज्ञा

**य आधारस्तदधिकरणम्** (२/४/११) ।

*(दुर्गवृत्तिः)*

आध्रियन्ते क्रिया यस्मिन्नित्याधारः । आधारो यस्तदधिकरणसंज्ञम्भवति । यथा 'कटे आस्ते, तिलेषु तैलम्' इत्यादि । [ **पाठा०**–दिवि देवाः तथा गङ्गायां घोषः । अङ्गुल्यग्रे करिशतम् । अधिकरणप्रदेशाः–"अधिकरणे सप्तमी" (२/४/१९) इत्येवमादयः ] ।

## [ हिन्दी-अनुवाद ] कलापव्याकरण में अधिकरणसंज्ञा

जिसमें क्रियाएँ आश्रित होती हैं = रहती हैं, उसे आधार कहते हैं । आधार की अधिकरणसंज्ञा होती है । जैसे–'कटे आस्ते, तिलेषु तैलम्' (चटाई पर बैठा है, तिलों में तेल रहता है) इत्यादि ।

## ८८. गान्धर्वेऽधिकरणसंज्ञा

**यस्मिन्नस्ति तदधिकरणम्** (२/३/१४) ।

यस्मिन् यस्मिन् श्रुतिरस्ति तत् कारकमधिकरणसंज्ञम्भवति । यथा षड्जे श्रुतिरस्ति, ऋषभे श्रुतिरस्ति इत्यादि ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में अधिकरणसंज्ञा

जिस जिस स्वर में श्रुति रहती है, उस उस कारक की अधिकरण संज्ञा होती है । जैसे–'षड्ज स्वर में श्रुति है, ऋषभस्वर में श्रुति है' इत्यादि ।

## टिप्पणी-६४

आधार की अधिकरण संज्ञा पाणिनि तथा शर्ववर्मा दोनों ही शाब्दिकाचार्यों ने की है । पाणिनि का सूत्र है–"**आधारोऽधिकरणम्**" (अ० १/४/४५) । व्याख्याकारों ने आधार उसे कहा है, जिसमें क्रिया रहती हो । क्रिया साक्षात् सम्बन्ध से कहीं कर्ता में और कहीं कर्म में रहती है । अतः कर्तृ-कर्मसंज्ञा की बाधिका यह अधिकरणसंज्ञा सिद्ध न हो, इसलिये व्याख्याकारों का अभिमत है कि कर्ता और कर्म साक्षात् सम्बन्ध से जिसके आश्रय होंगे, वहाँ आधार माना जायेगा और इसी आधार की अधिकरणसंज्ञा प्रवृत्त होगी । इस प्रकार परम्परा से क्रिया के आधार को अधिकरण कहेंगे–"**परम्परया क्रियाधारभूतत्वम् अधिकरणत्वम्**" । सामान्यतया

आधार तीन माने जाते हैं–औपश्लेषिक, वैषयिक तथा अभिव्यापक । परन्तु इनके अतिरिक्त सामीपिक, औपचारिक एवं नैमित्तिक आधारों को भी व्याख्याकारों ने स्वीकार किया है । एक श्लोक में इन सभी के उदाहरण मिल जाते हैं–

**कटे शेते कुमारोऽसौ वटे गावः सुशेरते ।**
**तिलेषु विद्यते तैलं हृदि ब्रह्मामृतं परम् ।।**
**युद्धे संनह्यते धीरोऽङ्गुल्यग्रे करिणां शतम् ।।**

(द्र०, सि० च०-पृ० २४८, आधारे सप्तमी) ।

यह ज्ञातव्य है कि पाणिनीय व्याख्याकार अभिव्यापक आधार का उदाहरण प्रायः 'तिलेषु तैलम्' प्रस्तुत करते हैं, परन्तु तिलसर्वांश में तैल की अभिव्याप्ति न देखे जाने के कारण (कल्कांश के भी रहने से) कातन्त्रव्याख्याकार 'दिवि देवाः' उदाहरण समीचीन मानते हैं । किसी ने इसे वैषयिक आधार का भी उदाहरण माना है । **'निर्देशः सम्प्रदानापादानप्रभृतिसंज्ञाभिः'** (ना० शा० १४/२३) इस वचन में प्रभृतिशब्द से अधिकरण का भी बोध होने के कारण इसे पूर्वाचार्यप्रयुक्त ही कहा जा सकता है । इस विषय में भाष्यव्याख्याप्रपञ्चकार द्वारा प्रस्तुत भागुरिमत भी द्रष्टव्य है (पृ० १२९) ।

अर्वाचीन शाब्दिकाचार्यों ने भी इस संज्ञा का प्रयोग किया है–

**जैनेन्द्रव्याकरण**–आधारोऽधिकरणः (१/२/११६) ।
**हैमशब्दानुशासनम्**–क्रियाश्रयस्याधारोऽधिकरणम् (२/२/३०) ।
**मुग्धबोधव्याकरण**–कालभावाधारं डं प्ती (सू० ३०९) ।
**अग्निपुराण**–आधारो योऽधिकरणं विभक्तिस्तत्र सप्तमी (३५०/२८) ।
**नारदपुराण**–ङ्योस्सुपः सप्तमी तु स्यात् सा चाधिकरणे भवेत् ।।
आधारे चापि ।। (५२/८-९) ।
**शब्दशक्तिप्रकाशिका–यत् क्रियायां यादृशार्थः सप्तम्या विग्रहस्थया ।**
**बोधस्तस्यां तदेवाधिकरणं नाम कारकम् ।।** (कारिका ७२) ।

सङ्गीतशास्त्र में श्रुति के आधारभूत स्वर की अधिकरणसंज्ञा करके व्याकरणशास्त्रीय मान्यता से पर्याप्त सादृश्य दिखाया गया है ।

## ८९. कलापे करणसंज्ञा

**येन क्रियते तत् करणम्** (२/४/१२) ।

***(दुर्गवृत्तिः)***

कर्त्रा येन क्रियते तत् कारकं करणसंज्ञम्भवति । यथा 'दात्रेण धान्यं लुनाति, मनसा मेरुं गच्छति' इत्यादि । [ **पाठा०**—तथा पशुना रुद्रं यजते । प्रकृत्या

अभिरूप: । प्रायेण याज्ञिक: । गोत्रेण गार्ग्य: । समेन धावति । विषमेण धावति । द्विद्रोणेन धान्यं क्रीणाति । पञ्चकेन पशून् क्रीणाति । शतेन परिक्रीत: । 'त्वं मासं कर्म करिष्यसि' इति । प्रधानक्रियापेक्षं तादर्थ्यम् । करणप्रदेशा:—"करणे तृतीया" (२/४/१९) इत्येवमादय: ] ।

## [ हिन्दी-अनुवाद ] कलापव्याकरण में करणसंज्ञा

जिससे साक्षात् कोई क्रिया की जाती है, उस कारक की करण संज्ञा होती है । जैसे—दात्रेण धान्यं लुनाति, मनसा मेरुं गच्छति । हँसिया से धान्य काटता है, मन से सुमेरु पर्वत जाता है—इत्यादि ।

## ८९. गान्धर्वे करणसंज्ञा

**येन दीप्यते तत् करणम्** (२/३/१५) ।

येन स्वरो दीप्यते तत् कारकं करणसंज्ञम्भवति । यथा—'श्रुत्या स्वर: प्रकाशते' दीप्यते इत्यर्थ: ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में करणसंज्ञा

जिससे स्वर प्रकाशित होता है, उस कारक की करण संज्ञा होती है । जैसे—श्रुति से स्वर प्रकाशित होता है ।

## टिप्पणी-६५

क्रिया की सिद्धि में अपेक्षित अनेक साधनों में से कर्ता जिस साधन को अन्तरङ्ग समझकर उससे कार्य करने का निश्चय करता है, उसकी करण संज्ञा दोनों व्याकरणों में की गई है । पाणिनि का सूत्र है—"साधकतमं करणम्" (अ० १/४/४२)। करण दो प्रकार का होता है—

१. बाह्य-दात्रेण धान्यं लुनाति ।

२. आभ्यन्तर—मनसा मेरुं गच्छति ।

**"निर्देश: सम्प्रदानापादानप्रभृतिसंज्ञाभि:"** (ना० शा० १४/२३) इस नाट्यशास्त्रीय वचन में 'प्रभृति' शब्द से करण का भी उपादान होने के कारण इसकी प्राचीनता तथा प्रामाणिकता सिद्ध होती है । 'अव्यवधानेन क्रियते येन तत्' इस व्युत्पत्ति के बल पर करण को अन्वर्थ माना जाता है । अर्वाचीन व्याकरणों में भी यह संज्ञा उपलब्ध होती है । जैसे—

**जैनेन्द्रव्याकरण**—साधकतमं करणम् (१/२/११४) ।

**हैमशब्दानुशासन**—साधकतमं करणम् (२/२/२४) ।

**मुग्धबोधव्याकरण**—साधनहेतुविशेषणभेदकं घं कतघिस्त्री (सू० २८८) ।

**अग्निपुराण**—क्रियते येन करणम् । अनुक्ते तिङ्कृत्तद्धितैस्तृतीया करणे भवेत् (३५०/२५) ।

**नारदपुराण**—येन क्रियते तत् करणम् (५२/५) ।

**शब्दशक्तिप्रकाशिका**—योऽर्थो विकरणात्तस्य धातोरर्थे तृतीयया ।
बोध्यते करणं नाम कारकं तदिहोच्यते ॥
(कारिका ७१) ।

सङ्गीतशास्त्र में जिससे स्वर प्रकाशित होता है, उस कारक की की गई करणसंज्ञा व्याकरणशास्त्रीय करणसंज्ञा से अर्थतः समानता रखती है ।

## ९०. कलापे कर्मसंज्ञा

**यत् क्रियते तत् कर्म** (२/४/१३) ।

कर्त्रा यत् क्रियते तत् कारकं कर्मसंज्ञम्भवति । यथा–'कटं करोति, ओदनं पचति' इत्यादि । [ **पाठा०**–आदित्यं पश्यति । तथा अहिं लङ्घयति । ग्रामं गच्छन् वृक्षमूलान्युपसर्पति । तथा स्तोकं पचति । गां दोग्धि पयः, पौरवं गां याचते । गामवरुणद्धि व्रजम् । छात्रं पन्थानं पृच्छति । पौरवं गां भिक्षते । वृक्षमवचिनोति फलानि । शिष्यं धर्मं ब्रूते । शिष्यं धर्ममनुशास्ति । अजां नयति ग्रामम् । ग्रामं वहति भारम् । हरते कुम्भं भारम् । ग्रामं छात्रशतं जयति । गर्गान् शतं दण्डयति । ग्राममधिशेते । ग्राममधितिष्ठति । वृक्षमध्यास्ते । धर्ममभिनिविशते । त्रिरात्रमुपवसति । पर्वतम् अधिवसति । आवसथमावसति । अक्षान् दीव्यति । "अक्षैर्दीव्यति' (दु०वृ० २/४/१३) इति करणविवक्षा । मासं गुडधानाः । क्रोशं कुटिला नदी । भवतेर्गम्यमानत्वात् । कर्मप्रदेशाः–"कर्मणि द्वितीया" (२/४/१९) इत्येवमादयः ] ।

## [ हिन्दी-अनुवाद ] कलापव्याकरण में कर्मसंज्ञा

कर्ता के द्वारा जो किया जाता है, उसकी कर्म संज्ञा होती है । जैसे–कटं करोति, ओदनं पचति । 'चटाई बनाता है, भात पकाता है' इत्यादि ।

## ९०. गान्धर्वे कर्मसंज्ञा

**यद्विभागरूपं क्रियते तत् कर्म** (२/३/१६) ।

श्रुतिविभागरूपं यत् क्रियते तत् कारकं कर्मसंज्ञम्भवति । यथा–स्वरकर्ता श्रुतिविभागं करोति ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में कर्मसंज्ञा

श्रुतिविभागरूप जो भी कार्य किया जाता है, उस कारक की कर्म संज्ञा होती है । जैसे–स्वरों का उच्चारण करने वाला श्रुतियों = ध्वनियों का विभाग करता है ।

## टिप्पणी- ६६

क्रियाजन्यफलशालित्वं कर्मत्वम् । अर्थात् कर्ता के द्वारा विहित क्रिया से जन्य फल के आश्रय को कर्म कहते हैं । इसी अर्थ को प्रकृत सूत्र द्वारा स्पष्ट किया गया है । पाणिनि ने इसके लिये न्यूनत: ५ सूत्र बनाये हैं–

१. **कर्तुरीप्सिततमं कर्म ।**

२. **तथायुक्तं चानीप्सितम्** ।

३. **अकथितं च ।**

४. **गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ ।**

५. **अधिशीङ्स्थासां कर्म** (अ० १/४/४९, ५०, ५१, ५२, ४६) ।

इनके अतिरिक्त "आदिखाद्यो: प्रतिषेधो वक्तव्य:" इत्यादि अनेक वार्त्तिक-वचन उपलब्ध होते हैं । कातन्त्र के व्याख्याकारों ने इन सभी को अनावश्यक बताया है । सामान्यतया कर्म तीन प्रकार के होते हैं–१. निर्वर्त्य, २. विकार्य तथा ३. प्राप्य ।

१. निर्वर्त्यते निष्पाद्यते यत् तत् निर्वर्त्यम् । विस्तृत लक्षण इस प्रकार है–**प्रकृतिभूतपदासमभिव्याहृतपदोपस्थाप्यत्वे सति क्रियाजन्योत्पत्तिरूपफलवत्त्वं निर्वर्त्यत्त्वम् ।** जैसे-कटं करोति ।

२. विकार्यते यत् तद् विकार्यम् । अर्थात् विकृति को प्राप्त होने वाली वस्तु विकार्य कर्म कही जाती है । जैसे–काष्ठं भस्म करोति, ओदनं पचति, सुवर्णं कुण्डलं करोति । विकार्य कर्म का विस्तृत लक्षण इस प्रकार है–**प्रतीयमानविकृतिभावत्त्वे सति क्रियाजन्यफलवत्त्वं विकार्यत्वम् ।**

३.यत्र तु निर्वर्त्यविकार्यसम्बन्धिनो विशेषा: पूर्वोक्ता: प्रत्यक्षेणानुमानेन वा कर्त्रा न प्रतीयन्ते केवलं प्राप्तिमात्रमेव प्रतीयते तत् प्राप्यं कर्म । अर्थात् निर्वर्त्य तथा विकार्य से भिन्न एवं क्रियाजन्य फल के आश्रय को प्राप्य कर्म कहते हैं–**निर्वर्त्यविकार्यभिन्नत्वे सति क्रियाजन्यफलशालित्त्वं प्राप्यत्वम् ।**

जैसे-आदित्यं पश्यति ।

कुछ आचार्य कर्म के सात भेद मानते हैं–१. निर्वर्त्य । २. विकार्य । ३. प्राप्य । ४. उदासीन । ५. अनीप्सित । ६. संज्ञान्तरानाख्यात तथा ७. अन्यपूर्व । जैसे–

१. निर्वर्त्य - कटं करोति ।

२. विकार्य - ओदनं पचति ।

३. प्राप्य - आदित्यं पश्यति ।

४. उदासीन - ग्रामं गच्छन् वृक्षमूलान्युपसर्पति ।

५. अनीप्सित - अहिं लङ्घयति ।

६. संज्ञान्तरानाख्यात - गां दोग्धि पयः ।

७. अन्यपूर्व - ग्राममधिशेते ।

**पूर्वाचार्यों द्वारा कर्मसंज्ञा का प्रयोग**

**नाट्यशास्त्र**-निर्देशः संप्रदानापादानप्रभृतिसंज्ञाभिः (१४/२३) में प्रभृति शब्द से ग्राह्य ।

**काशकृत्स्नधातुव्याख्यान– भूते भव्ये वर्तमाने भावे कर्तरि कर्मणि ।**
**प्रयोजके गुणे योग्ये धातुभ्यः स्युः क्विबादयः ।।**
**अकर्मकेभ्यो धातुभ्यो भावे कर्मणि यङ् स्मृतः ।।**
**धातौ साधने दिशि पुरुषे चिति तदाख्यातम् ।**
**लिङ्गे किमि चिति विभक्तावेतन्नाम ।**
(सू० ४५, १३०, १-२)।

अर्वाचीन आचार्यों द्वारा कर्मसंज्ञा का प्रयोग–

**चान्द्रव्याकरण**–क्रियाप्ये द्वितीया (२/१/४३) ।

**जैनेन्द्रव्याकरण**–दिवः कर्म, कर्मैवाधिशीङ्स्थासः (३/२/११५, १७-२३) ।

**हैमशब्दानुशासन** - कर्तुर्व्याप्यं कर्म (२/२/३) ।

**मुग्धबोधव्याकरण**- कर्मक्रियाविशेषणाभिनिवेशाधिशीङ्स्थासन्वध्युपावस ड ढं द्वी, देशाध्वकालभावं वाढैः (सू० २८१-८२) ।

**अग्निपुराण- संबोधने च प्रथमा उक्ते कर्तरि कर्मणि ।**
**कर्म यत् क्रियते तत् स्याद् द्वितीया कर्मणि स्मृता ।।**
(३५०/२४-२५) ।

**नारदपुराण– ---------तत् कर्म क्रियते च यत् ।**
**द्वितीया कर्मणि प्रोक्ताऽन्तरान्तरेण संयुते ।।** (५२/४) ।

**शब्दशक्तिप्रकाशिका–यङन्तधातोरर्थो यस्तिङा स्वार्थेऽनुभाव्यते ।**
**यश्चासौ कर्मता नाम कारकं कर्तृतेतरः ।।** (का०७३) ।

सङ्गीतशास्त्र में कर्ता के द्वारा किए जाने वाले श्रुतिविभागादिरूप कार्यों की कर्मसंज्ञा का उक्त से साम्य ही सिद्ध होता है ।

## ११. कलापे कर्तृसंज्ञा

**यः करोति स कर्ता** (२/४/१४) ।

यः क्रियां करोति स कर्तृसंज्ञो भवति । यथा–'छात्रो गच्छति, चैत्रेण कृतम्' इत्यादि ।

## [ हिन्दी-अनुवाद ] कलापव्याकरण में कर्ता संज्ञा

जो क्रिया को करता है, उसकी कर्ता संज्ञा होती है । जैसे–'छात्र जाता है, चैत्र के द्वारा किया गया है' इत्यादि ।

## ९१. गान्धर्वे कर्तृसंज्ञा

**यः करोति स कर्ता** (२/३/१७) ।

यः श्रुतिविभागरूपां क्रियां करोति स कर्तृसंज्ञो भवति । यथा–श्रुतिः शुद्धस्वरं विभजति, श्रुत्या कोमलस्वरो विभज्यते च ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में कर्ता संज्ञा

जो श्रुति विभागरूप क्रिया को करती है, उसकी कर्ता संज्ञा होती है । जैसे–श्रुति शुद्धस्वर का विभाग करती है, श्रुति के द्वारा कोमल स्वर का विभाग किया जाता है ।

## टिप्पणी-६७

कातन्त्रकार तथा पाणिनि की कर्तृसंज्ञाविषयक परिभाषा प्रायः समान ही है । पाणिनि का सूत्र है–"**स्वतन्त्रः कर्ता**" (अ० १/४/५४) । स्वतन्त्र का अर्थ है–प्रधानभूत । यही अर्थ कलापचन्द्र के व्याख्याकार सुषेण विद्याभूषण ने स्वीकार किया है–'करोतीति आख्यातप्रत्ययेन स्वतन्त्र उच्यते, शब्दानां नित्यत्वान्नेतरेतराश्रयदोषः । क्रियायां यः स्वतन्त्रः स कर्तेत्यर्थः' । इसके अनेक लक्षण व्याख्याकारों ने इस प्रकार किये हैं–'क्रियाश्रयत्वं कर्तृत्वम् । प्राधान्येन धातुवाच्यव्यापारवत्त्वं कर्तृत्वम्' । यह स्वतन्त्र कर्ता भी 'अभिहित, अनभिहित' तथा 'कर्मकर्ता' के भेद से तीन प्रकार का होता है । जैसे–

१. अभिहितकर्ता–देवदत्तः पचति ।

२. अनभिहितकर्ता–देवदत्तेन पच्यते ।

३. कर्मकर्ता–पच्यते ओदनः स्वयमेव ।

नामभेद से भी यह तीन प्रकार का माना गया है–केवलकर्ता, हेतुकर्ता तथा कर्मकर्ता । पूर्वाचार्यों द्वारा कर्ता का प्रयोग–

**काशकृत्स्नव्याकरण**–भूते भव्ये वर्तमाने भावे कर्मणि कर्तरि ।
प्रयोजके गुणे योग्ये धातुभ्यः स्युः क्विबादयः ॥
प्रयोज्यकर्तरि णिच् ॥ (सू० ४५, १२७) ।

**नाट्यशास्त्रं**–संप्रदानापादानप्रभृतिसंज्ञाभिः (१४/२३)।

**अर्वाचीन आचार्यों द्वारा कर्ता का प्रयोग**

**जैनेन्द्रव्याकरण**–स्वतन्त्रः कर्ता (१/२/१२५)।

**हैमशब्दानुशासन**–स्वतन्त्रः कर्ता (२/२/२)।

**मुग्धबोधव्याकरण**–साधनहेतुविशेषणभेदकं धं कर्ता घस्त्री (सू० २८८)।

**अग्निपुराण**– कर्ता यश्च करोति सः।
संबोधने च प्रथमा उक्ते कर्मणि कर्तरि।
कर्ता पञ्चविधः प्रोक्तः॥ (२५०/२५, २४; ३५३/४)।

**नारदपुराण–स कर्ता स्यात् करोति यः। टाभ्यांभिसस्तृतीया स्यात् करणे कर्तरीरिता॥**
**स्वौजसः प्रथमा प्रोक्ता सा प्रातिपदिकात्मिका।**
**संबोधने च लिङ्गादावुक्ते कर्मणि कर्तरि॥** (५२/२-३)।

**शब्दशक्तिप्रकाशिका– तिङा विकरणाक्तस्य धातोरर्थस्तु यादृशः।**
**स्वार्थे यादृशि बोध्यस्तत् कर्तृत्वं तदिहोच्यते॥**
(कारिका- ७५)।

सङ्गीतशास्त्र में स्वरों का विभाग करने वाली श्रुति की कर्ता संज्ञा का उक्त से कुछ साम्य तो अवश्य ही कहा जा सकता है।

## ९२. गान्धर्वे विशेष्यसंज्ञा

**स्वराश्च विशेष्याः** (२/३/१८)।

षड्जादयः सप्त स्वराः सङ्गीते विशेष्यसंज्ञा भवन्ति। उदाहरणं यथाक्रमेण ज्ञातव्यमिति।

## [हिन्दी-अनुवाद] सङ्गीतशास्त्र में विशेष्यसंज्ञा

सङ्गीतशास्त्र में षड्ज आदि सात स्वरों की विशेष्य संज्ञा होती है। उदाहरण के रूप में षड्ज आदि सात स्वर क्रम से जानने चाहिये।

## ९३. गान्धर्वे विशेषणसंज्ञा

**भूषणानि विशेषणानि** (२/३/१९)।

भूषणानि तान-गमक-कृन्तन-मूर्च्छनाप्रभृत्यलङ्कारादीनि विशेषणसंज्ञकानि भवन्ति। तद्विशेषो यथा–

## [हिन्दी-अनुवाद] सङ्गीतशास्त्र में विशेषणसंज्ञा

'तान - गमक - कृन्तन - मूर्च्छना' इत्यादि अलङ्कारों की विशेषण संज्ञा होती है।

## १४. गान्धर्वेऽलंकारसञ्ज्ञा

**अलङ्क्रियते येन सोऽलङ्कारः** (२/३/२०) ।

विशिष्टस्वरसन्दर्भमलङ्कारं प्रचक्षते । तथाहि-केऽपि विलक्षणविशिष्टस्वरसन्दर्भं स्वरसमुदायमलङ्कारं प्रचक्षते । तथा चाह **मतङ्गः**—"अलङ्कारशब्देन मण्डनमुच्यते, यथा किरीटकेयूरादिना अलङ्कारेण नारी पुरुषो वा मण्डितः सन् शोभामावहति, तथैवालङ्कारैः प्रसन्नादिभिरलङ्कृताः स्वराः श्रोतुः श्रोत्रे सुखावहा भवन्तीति भावः । प्रसन्नादिभिः प्रसन्नतारमन्द्रादिभिरित्यर्थः" । एतत् प्रपञ्चितं **सुधाकरे** ।

**।। इति वेदान्तदर्शन - व्याकरण - सङ्गीतादि - नानाशास्त्रविशारद-**
**ठाकुरोपाधिक - श्रीमद्धरकुमारज - सङ्गीतनायक-**
**श्रीमच्छौरीन्द्र - कृत-गान्धर्ववृत्तौ नाम्नि**
**गान्धर्वचतुष्टये कारकपादः**
**समाप्तः ।।**

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में अलङ्कारसंज्ञा

विशिष्ट स्वरसन्दर्भ को अलङ्कार कहते हैं । अर्थात् कुछ विद्वान् विलक्षण स्वरसमुदाय की अलङ्कारसंज्ञा करते हैं । आचार्य मतङ्ग ने अलङ्कार का अर्थ किया है—मण्डन । जैसे मुकुट-बाजूबन्द इत्यादि अलङ्कारों से सुसज्जित होकर कोई भी स्त्री या पुरुष सुशोभित होता है, उसी प्रकार प्रसन्नता आदि अलङ्कारों से अलङ्कृत स्वर किसी भी श्रोता के कानों को सुख पहुँचाते हैं । प्रसन्नादि = प्रसन्न-तार-मन्द्र आदि । इसका विस्तार 'सुधाकर' ग्रन्थ में किया गया है ।

**नामचतुष्टयप्रकरण-तृतीय कारकपाद समाप्त ।**

# अथ चतुष्टयवृत्तिः

## चतुर्थः समासपादः

### १५. गान्धर्वे शब्दविधिः

**एकमात्रात्मकस्वरः शब्दम्** (२/४/१) ।

| I | I | I |
|---|---|---|
| स | म | प |

एवमन्येऽपि ज्ञेया इति ।

### [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में शब्दसंज्ञा

एकमात्रात्मक एक स्वर की शब्दसंज्ञा होती है । इसी को शब्द कहते हैं । जैसे–

| I | I | I |
|---|---|---|
| स | म | प |

इसी प्रकार से अन्य शब्द भी जानने चाहिये ।

### १६. गान्धर्वे पदविधिः

**द्वौ बहवश्च पदम्** (२/४/२) ।

मात्रायुक्तौ द्वौ स्वरौ मात्रायुक्ता बहवः स्वराश्च सर्वे पदमापद्यन्ते । यथा–

| II | III | III | II |
|---|---|---|---|
| स ग | म प ध | नि स स | ऋ ध |

एवं सप्तकान्तरेऽपि ज्ञेयमिति ।

### [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में पदसंज्ञा

मात्रायुक्त दो स्वरों और बहुत से स्वरों की पदसंज्ञा होती है । जैसे–

| I I | I I I | I I I | I I |
|---|---|---|---|
| स ग | म प ध | नि स स | ऋ ध |

इसी प्रकार से अन्य सात स्वरों में भी जानना चाहिये ।

# अथ समासप्रकरणम्

## ९७. कलापे समाससंज्ञा

**नाम्नां समासो युक्तार्थः** (२/५/१) ।

*(दुर्गवृत्तिः)*

**वस्त्वादीनि नामानि मिलितं युक्तमुच्यते ।**

**नाम्नां युक्तार्थः समाससंज्ञो भवति । [ पाठा०**–ततोऽन्यद् वाक्यमिति रूढम्, संज्ञयैव वा विधिरन्वाख्यातः । स पुनरभिधानात् क्वचिन्नित्यः, क्वचिद् विकल्पः, क्वचिन्न स्यात् । तथा च वक्ष्यति **]** ।

## [ हिन्दी-अनुवाद ] कलापव्याकरण में समाससंज्ञा

वस्तु आदि को नाम तथा मिलित रूप को युक्त कहते हैं । नामों के युक्तार्थ की समाससंज्ञा होती है ।

## ९७. गान्धर्वे समाससञ्ज्ञा

**मात्रादीनां समासो युक्तार्थः** (२/४/३) ।

मात्रा - लय - स्वरालङ्कार - यति - प्रस्तारकादीनाम् मिलितं युक्तमुच्यते । मात्रादीनां युक्तार्थः समाससंज्ञो भवति ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में समाससंज्ञा

मात्रा-लय-स्वर-अलङ्कार-यति-प्रस्तारक आदि के मिलित रूप को युक्त कहते हैं । मात्रा इत्यादि के युक्तार्थ की समाससंज्ञा होती है ।

## टिप्पणी- ६८

सामान्यजन हो या विद्वान्, कभी वह किसी विषय को विस्तार से कहता है तो कभी संक्षेप में, क्योंकि यह सभी की प्रवृत्ति होती है । कृष्णद्वैपायन वेदव्यास ने कहा है—

**विस्तीर्य हि महज्ज्ञानमृषिः संक्षेपतोऽब्रवीत् ।**
**इष्टं हि विदुषां लोके समासव्यासधारणम् ।।**

(निरुक्त-दु० भा० ४/१/१; मभार० १/५/१) ।

इसीलिए व्याकरणशास्त्र में समास और वाक्य समादृत हैं । समास में संक्षेप और वाक्य में विस्तार स्पष्टरूप में देखा जाता है । जैसे—'राजन् + ङस् + पुरुष + सु' में समास होने पर 'राजपुरुष' रूप निष्पन्न होता है । यहाँ 'ङस् सु' या 'सि' का लुक् (**सुपो धातुप्रातिपदिकयोः-अ० २/४/७१**) हो जाने से संक्षेप हो जाता है ।

आचार्य शर्ववर्मा ने समास की परिभाषा की है। तदनुसार दो या उनसे अधिक स्याद्यन्त पदों के मिलकर एक हो जाने को समास कहते हैं –**"नाम्नां समासो युक्तार्थः"** (२/५/१), परन्तु पाणिनि ने समास का कोई अर्थ नहीं दिया है, केवल अधिकार के रूप में ही समास को प्रस्तुत किया है—**"प्राक् कडारात् समासः"** (अ० २/१/३)।

वाक्यपदीयकार भर्तृहरि ने वाक्य-समास की प्रक्रिया को मन्दमति व्यक्तियों के अवबोधार्थ एक उपायमात्र बताया है—

**अबुधं प्रत्युपायाश्च विचित्राः प्रतिपत्तये।**
**शब्दान्तरत्वादत्यन्तं भेदो वाक्यसमासयोः ॥**

(वा० प० ३/१४/४९)।

समास को एकार्थीभाव भी कहते हैं। वाक्य में प्रयुक्त अनेक पदों के अर्थ इसमें एकरूप हो जाते हैं। यह प्रक्रिया विविध वृत्तिधर्मों के प्रयोग से होने वाले गौरव को दूर करने के उद्देश्य से व्यवहार में लाई जाती है—

**बहूनां वृत्तिधर्माणां वचनैरेव साधने।**
**स्यान्महद् गौरवं तस्मादेकार्थीभाव आस्थितः ॥**

(वै० भू० सा०, का० ३३)।

यह ज्ञातव्य है कि संक्षेप करने के लिये कम से कम दो शब्दों की आवश्यकता होती है और जब इनमें समास उपपन्न होता है, तब यह विचार उत्पन्न होना स्वाभाविक है कि उन दो शब्दों में से कौन प्रधान है तथा कौन अप्रधान ? इस प्रकार सामान्यतया पूर्वपदार्थप्रधान समास को अव्ययीभाव, उत्तरपदार्थप्रधान को तत्पुरुष, उभयपदार्थप्रधान को द्वन्द्व तथा अन्यपदार्थप्रधान को बहुव्रीहि नाम दिया गया है। तत्पुरुष समास में प्रथमान्त विशेष्य-विशेषण आदि शब्दों का समास 'कर्मधारय' नाम से तथा उसमें भी संख्यापूर्वक शब्दों का समास 'द्विगु' नाम से प्रसिद्ध है। इस प्रकार छह समास व्याकरणशास्त्र में मान्य हैं। जैसे कहा गया है—

**द्वन्द्वो द्विगुरपि चाहं गेहे मे नित्यमव्ययीभावः।**
**तत्पुरुष कर्म धारय येनाहं स्यां बहुव्रीहिः ॥**

(द्र०, व्या० द० इति०, पृ० १९६)।

दूसरे प्रकार से भी समास छह प्रकार का परिगणित है। जैसे—१. सुबन्त का सुबन्त के साथ। २. सुबन्त का तिङन्त के साथ। ३. सुबन्त का नाम (प्रातिपदिक) के साथ। ४. सुबन्त का धातु के साथ। ५. तिङन्त का तिङन्त के साथ तथा ६. तिङन्त का सुबन्त के साथ—

**सुपां सुपा तिङा नाम्ना धातुनाथ तिङां तिङा ।**
**सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः ।।**
(वै० भू० सा०, समास-प्र०, का० १) ।

पूर्वाचार्यों ने भी इस संज्ञा का प्रयोग किया है—

**निरुक्त**—अथ तद्धितसमासेष्वेकपर्वसु चानेकपर्वसु च पूर्वं पूर्वमपरमपरं प्रविभज्य निर्ब्रूयात् ।------एवं तद्धितसमासान्निर्ब्रूयात् (२/१) ।

**बृहद्देवता**—विग्रहान्निर्वचः कार्यं समासेष्वपि तद्धिते ।
द्विगुर्द्वन्द्वोऽव्ययीभावः कर्मधारय एव च ।
पञ्चमस्तु बहुव्रीहिः षष्ठस्तत्पुरुषः स्मृतः ।। (२/१०६, १०५) ।

**ऋक्प्रातिशाख्य**—सहेतिकाराणि समासमन्तभाक् (११/२५) ।
पुनर्ब्रुवंस्तत्र समासमिङ्गयेत् (११/३१) ।

**वाजसनेयिप्रातिशाख्य**—तिङ्कृत्तद्धितचतुष्टयसमासाः शब्दमयम् (१/२७) ।

**अथर्ववेदप्रातिशाख्य**—गतिपूर्वो यदा धातुः क्वचित् स्यात् तद्धितोदयः ।
समस्यते गतिस्तत्र, आ गमिष्ठा इति निदर्शनम् ।
(१/१/११,१२,१३) ।

**ऋक्तन्त्र**—मासे यथादृष्टः । समासे इति । समास ऋक्षु चान्द्रे ।
(२/१/१; ३/१/५; ४/९, ५/३, ७/५, ४/७/३; ११) ।

**नाट्यशास्त्र**— नामाख्यातनिपातैरुपसर्गसमासतद्धितैर्युक्तः ।
सन्धिविभक्तिषु युक्तो विज्ञेयो वाचकाभिनयः ।। (१४/४, ३२) ।

**अर्वाचीन व्याकरणों में समास का प्रयोग**

**जैनेन्द्रव्याकरण**—सः (१/३/२) ।

**शाकटायनव्याकरण**—सुप् सुपा (२/१/१) ।

**हैमशब्दानुशासन**—नाम नाम्नैकार्थ्ये समासो बहुलम् (३/१/१८) ।

**मुग्धबोधव्याकरण**—दैक्यं सोऽन्वये (सू० ३१७) ।

**अग्निपुराण**—षोढा समासं वक्ष्यामि अष्टाविंशतिधा पुनः (३५४/१) ।

**नारदपुराण**—अधिस्त्रीत्यव्ययीभावे यथाशक्ति च कीर्तितम् (५२/९१-९६) ।

**शब्दशक्तिप्रकाशिका**—यादृशस्य महावाक्यान्तस्त्वादिर्निजार्थके ।
यादृशार्थस्य धीहेतुः स समासस्तदर्थकः ।। (का० ३१-३३) ।

सङ्गीतशास्त्र में मात्रा-लय आदि के युक्तार्थ की समास संज्ञा इससे अर्थतः साम्य रखती है ।

## ९८. कलापे विभक्तिलोपः

**तत्स्था लोप्या विभक्तयः** (२/५/२) ।

*(दुर्गवृत्तिः)*

तत्स्था युक्तार्थमात्रस्था विभक्तयो लोप्या भवन्ति । यथा नीलोत्पलम्, राजपुरुषः । [ **पाठा०** –राजता, पुत्रीयति ।क्वचिन्न लुप्यते, अभिधानात्– 'कण्ठेकालः, उरसिलोमा' इत्येवमादयः ] ।

## [ हिन्दी-अनुवाद ] कलापव्याकरण में विभक्तियों का लोप

युक्तार्थमात्र = समासमात्र में वर्तमान विभक्तियों का लोप होता है । जैसे– नीलोत्पलम्, राजपुरुषः । लोकव्यवहार के बल से कहीं पर लोप नहीं भी होता है ।

## ९८. गान्धर्वे विभक्तिलोपः

**समासे लोप्या विभक्तयः** (२/४/४) ।

समासे कृते मात्रादीनां युक्ते कृते विभक्तयो लोप्या भवन्ति । यथा–

स ऋ ग म प

क्वचिन्न लुप्यते तालविशेषात्-

II II II II II II

स ऋ ग म प स इत्यादि ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में विभक्तियों का लोप

समास करने पर अर्थात् मात्रा इत्यादि की युक्तार्थता होने पर विभक्तियों का लोप होता है । जैसे–

स ऋ ग म प

तालविशेष की स्थिति में कहीं पर विभक्तियों का लोप नहीं भी होता है । जैसे–

II II II II II II

स ऋ ग म प स इत्यादि ।

## टिप्पणी-६९

'नील + सि + उत्पल + सि, राजन् + ङस् + पुरुष + सि' आदि स्थिति में समास हो जाने पर 'सि, ङस्' आदि विभक्तियों का कातन्त्रकार के अनुसार लोप हो जाता है । पाणिनि समास हो जाने पर "**कृत्तद्धितसमासाश्च**" (अ० १/२/४५) से उसकी प्रातिपदिक संज्ञा करते हैं, उसके फलस्वरूप "**सुपो धातुप्रातिपदिकयोः**"

(अ० २/४/७१) से सुप्-विभक्ति का लुक् उपपन्न होता है। पाणिनि ने "**हलदन्तात् सप्तम्याः संज्ञायाम्, षष्ठ्या आक्रोशे**" (अ० ६/३/९, २१) इत्यादि २४ सूत्रों द्वारा सप्तमी-षष्ठी आदि विभक्तियों का अलुक् दिखाया है, परन्तु शर्ववर्मा ने लोकव्यवहार के आधार पर इसे स्वीकार करके तदर्थ सूत्र नहीं बनाये । वृत्तिकार दुर्गसिंह ने स्पष्ट करते हुये कहा है—**'क्वचिन्न लुप्यतेऽभिधानात् कण्ठेकालः, उरसिलोमा इत्येवमादयः'** । टीकाकार ने इसका विस्तार दिखाया है ।

मात्रा इत्यादि की युक्तार्थता होने पर सङ्गीतशास्त्र में जो विभक्तियों का लोप दिखाया गया है, वह व्याकरण से अर्थतः साम्य अवश्य रखता है ।

## १९. कलापे कर्मधारयसञ्ज्ञा

**पदे तुल्याधिकरणे विज्ञेयः कर्मधारयः** (२/५/५) ।

***(दुर्गवृत्तिः)***

यत्र समासे द्वे पदे तुल्याधिकरणे भवतः स कर्मधारयो विज्ञेयः । यथा-नीलञ्च तदुत्पलञ्चेति नीलोत्पलम् इत्यादि । [**पाठा०**–क्वचिन्नित्यसमासः–कृष्णसर्पः, लोहितशालिः । क्वचिदसमासः–दीर्घश्चारायणः, रामो जामदग्न्यः, व्यासः पाराशर्यः, अर्जुनः कार्तवीर्यः । तथैकाधिकरणत्वात्-कृष्णमदीकृतः, छिन्नप्ररूढः, एकपुरुषः, सर्वान्नम्, जरद्धस्ती, पुराणधान्यम्, नवोदकम्, केवलान्नम् । तथा पूर्वेषुकामशमी । संज्ञेयम् ।

संख्यापूर्वपदेऽपि–सप्तर्षयः, पञ्चाम्राः, तथा याज्ञिककितवः एवं पापकुलालः, अणकनापितः । क्वचिदुपमानभूतं विशेषणम्–शस्त्रीव श्यामा शस्त्रीश्यामा । क्वचिदुपमानभूतं विशेषणं परं स्यात्-पुरुषो व्याघ्र इव पुरुषव्याघ्रः । एवं पुरुषसिंहः । तथा पूर्वपुरुषः, अपरपुरुषः, प्रथमपुरुषः, चरमपुरुषः, जघन्यपुरुषः, समानपुरुषः, मध्यपुरुषः, मध्यमपुरुषः, वीरपुरुषः ।

एवम् अश्रेणयः श्रेणयः कृताः श्रेणिकृताः । तथा कृताकृतम्, भुक्तापभुक्तम्, गतप्रत्यागतम्, यातानुयातम्, अशितानशितम्, क्लिष्टाक्लिशितम् । क्रयाक्रयिका, फलाफलिका, पुटापुटिका, मानोन्मानिका । तथा सत्पुरुषः, महापुरुषः, परमपुरुषः, उत्तमपुरुषः, पुरुषोत्तम इति विशेषणं वा परं स्यात् । उत्कृष्टपुरुषः । तथा गोवृन्दारकः, गोनागः, अश्वकुञ्जरः, कतरकठः, कतमकठः, किंराजा । इभ्यपोटा, इभ्ययुवतिः । अग्निस्तोक इति विशेषणं परं स्यात् । एवं दधिकतिपयानि, गोगृष्टिः, गोधेनुः, गोवशा, गोवेहत्, गोवष्कयणी, कठप्रवक्ता, कठश्रोत्रियः, कठाध्यापकः, कठधूर्तः । तथा गोप्रकाण्डम्, अश्वमतल्लिका, युवखलतिः, युवखलती, युवपलितः, युवपलिता,

युववलिनः, युववलिना, युवजरम्, युवजरती। तथा भोज्योष्णम्, तुल्यश्वेतः, सदृशश्वेतः, शुक्लकृष्णः, शुक्लशुक्लः। कुमारी च सा श्रमणा चेति कुमारश्रमणा। कुमारप्रव्रजिता। कुमारपण्डितः, कुमारपण्डिता।

तथा गोगर्भिणी, अजगर्भिणी। तथा मयूर इव व्यंसको मयूरव्यंसकः। मयूरस्येव विगतावंसावस्येति वा विग्रहः। एवं छात्रव्यंसकः, कम्बोज इव मुण्डः कम्बोजमुण्डः। उच्चं च तदवचं चेति उच्चावचम्। एवम् उच्चनीचम्। न किञ्चन अकिञ्चनम्। अस्य वा किञ्चिन्नास्तीत्यकिञ्चनः। पूर्वश्चासौ कायश्चेति पूर्वकायः। कायैकदेशे कायः। एवम् अपरकायः, अधरकायः, उत्तरकायः, मध्यकायः, मध्यमकायः, मध्याह्नः। अर्धं च तत् पिप्पली चेति अर्धपिप्पली। पिप्पल्यर्धमिति षष्ठीसमासोऽपि दृश्यते हि।

चेद्यर्धं दक्षिणं मेरोः। शरार्धम्, चापार्धम्, चुल्लिकार्धमिति। असमप्रविभागेऽपि। न हीदम् अर्धजरतीयं लभ्यमिति। एवं द्वितीयभिक्षा, भिक्षाद्वितीयः। तृतीयभिक्षा, भिक्षातृतीयः। चतुर्थभिक्षा, भिक्षाचतुर्थः। तुर्यभिक्षा, भिक्षातुर्यः। तुरीयभिक्षा, भिक्षातुरीयः। मासजातः, संवत्सरजातः इति बहुव्रीहिणा सिद्धम्। न ब्राह्मणः अब्राह्मणः इति कर्मधारयः। कर्मधारयप्रदेशाः –"कर्मधारयसञ्ज्ञे तु पुंवद्भावो विधीयते" (२/५/२०) इत्येवमादयः]।

## [हिन्दी-अनुवाद] कलापव्याकरण में कर्मधारय संज्ञा

जिस समास में दो पद तुल्य अधिकरण वाले होते हैं, उसकी कर्मधारयसंज्ञा होती है। जैसे–नील और उत्पल = नीलोत्पल इत्यादि।

## ९९. गान्धर्वे कर्मधारयसञ्ज्ञा

**यन्त्रकण्ठादौ मात्राविशेषणयोर्योगे कतीनां व्यक्तो विज्ञेयः कर्मधारयः** (२/४/५)।

यन्त्रकण्ठादौ मात्राविशेषणयोर्योगे कतीनां स्वराणां व्यक्तो यः सः कर्मधारयो विज्ञेयः।

## [हिन्दी-अनुवाद] सङ्गीतशास्त्र में कर्मधारय संज्ञा

यन्त्र-कण्ठ इत्यादि में मात्रा-विशेषण का योग होने पर कुछ स्वरों में से अधिक स्पष्ट स्वर की कर्मधारय संज्ञा होती है।

### टिप्पणी-७०

'नीलं च तद् उत्पलं च' इस लौकिक विग्रह में वर्तमान 'नीलम्' तथा 'उत्पलम्' पदों का अधिकरण एक ही है, अतः इन पदों में होने वाले समास की कर्मधारयसंज्ञा दोनों ही व्याकरणों में की गई है। पाणिनि का सूत्र है-"**तत्पुरुषः**

**समानाधिकरणः कर्मधारयः''** (अ० १/२/४२) । यह कहीं पर नित्यरूप में प्रवृत्त होता है, तो कहीं उसकी प्रवृत्ति होती ही नहीं है । कहीं उपमानभूत विशेषण पूर्व पद में होता है तो कहीं पर उत्तर पद में-आदि । कुछ आचार्य कर्मधारय-घटित 'कर्म' शब्द को धर्मार्थपरक मानते हैं ।

पूर्वाचार्यों द्वारा भी इस संज्ञा का प्रयोग किया गया है । जैसे—

**बृहद्देवता**–द्विगुर्द्वन्द्वोऽव्ययीभावः कर्मधारय एव च (२/१०६,१०५) ।

**नाट्यशास्त्र**–तत्पुरुषादिकसंज्ञैर्निर्दिष्टः षड्विधः सोऽपि (१४/३२) ।

अर्वाचीन व्याकरणों में प्रयोग–

**जैनेन्द्रव्याकरण**—पूर्वकालैकसर्वजरत्पुराणनवकेवलं यश्चैकाश्रये (१/३/४४) ।

**शाकटायनव्याकरण**–विशेषणं व्यभिचार्येकार्थे कर्मधारयश्च (२/१/५८) ।

**हैमशब्दानुशासन**–विशेषणं विशेष्येणैकार्थे कर्मधारयश्च (३/१/९६) ।

**मुग्धबोधव्याकरण**–भिन्नान्येकार्थद्वयापि संख्याव्ययादीनां च - ह - य - ष - ग - वाः (सू० ३१८) ।

**शब्दशक्तिप्रकाशिका**– क्रमिकं यन्नामयुगमेकार्थेऽन्यार्थबोधकम् ।
तादात्म्येन भवेदेष समासः कर्मधारयः ।। (कारिका ३४) ।

**अग्निपुराण**– कर्मधारयः सप्तधा नीलोत्पलमुखः स्मृतः ।
विशेषणपूर्वपदो विशेष्योत्तरतस्तथा ।।
वैयाकरणखसूचिः शीतोष्णं द्विपदं शुभम् ।
उपमानपूर्वपदः शङ्खपाण्डुर इत्यपि ।।
उपमानोत्तरपदः पुरुषव्याघ्र इत्यपि ।
संभावनापूर्वपदो गुणवृद्धिरितीदृशम् ।।
गुण इति वृद्धिर्वाच्या सुहृदेव सुबन्धुकः ।
अवधारणपूर्वपदः-------------।।

(३५५/८-११) ।

**नारदपुराण**–नीलोत्पलं महाषष्ठी तुल्यार्थे कर्मधारयः (५२/९३) ।

सङ्गीतशास्त्र में मात्राविशेषण का योग होने पर कुछ स्वरों में से अधिक स्पष्ट स्वर की जो कर्मधारय संज्ञा होती है, उसका व्याकरणशास्त्रीय संज्ञा से आंशिक सादृश्य अवश्य है ।

## १००. कलापे द्विगुसंज्ञा

**संख्यापूर्वो द्विगुरिति ज्ञेयः** (२/५/६) ।

*(दुर्गवृत्तिः)*

कर्मधारय इति सम्बन्धः । यथा-पञ्चसु कपालेषु संस्कृत ओदनः पञ्चकपाल ओदनः । पञ्च गावो धनमस्येति पञ्चगवधनः इत्यादि । [**पाठा०**–पञ्चानां पूलानां समाहारः पञ्चपूली । तद्धितार्थोत्तरपदसमाहारेषु संज्ञेयम् ] ।

## [ हिन्दी-अनुवाद ] कलापव्याकरण में द्विगु संज्ञा

यहाँ कर्मधारय का सम्बन्ध है । अर्थात् सङ्ख्यापूर्वक कर्मधारय की द्विगु संज्ञा होती है । जैसे–पाँच कपालों में पकाया गया ओदन-पञ्चकपाल ओदनः, पाँच गाएँ ही जिसका धन है–पञ्चगवधनः इत्यादि ।

## १००. गान्धर्वे द्विगुसंज्ञा

**संख्या कतिपदे स्थित्वा नानातालरागाणां यो व्यक्तः स द्विगुरिति ज्ञेयः** (२/४/६) ।

मात्रायुक्ताः संख्याः संख्यावाचकाः कतिपयस्वराः पदे स्थित्वा अर्थात् पदरूपे न्यस्ता नानातालरागमानानां यो व्यक्तः स द्विगुरिति ज्ञेयः ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में द्विगु संज्ञा

मात्रा से युक्त सङ्ख्यावाचक पद के रूप में स्थित होने पर कुछ स्वरों में जो विविध ताल-राग आदि से व्यक्त होता है, उसकी द्विगु संज्ञा होती है ।

### टिप्पणी-७१

'पञ्चसु कपालेषु संस्कृतः' इत्यादि तद्धितार्थ में, 'पञ्च गावो धनमस्य' इत्यादि उत्तरपद में, 'पञ्चानां पूलानां समाहारः' इत्यादि समाहार में पाणिनि तथा शर्ववर्मा दोनों ही द्विगु समास मानते हैं । पाणिनि का सूत्र है–"**संख्यापूर्वो द्विगुः**" (अ० २/१/५२) । रचनाशैली की दृष्टि से उभयत्र समानता ही कही जा सकती है, क्योंकि पाणिनि पहले कर्मधारय, तदनन्तर तत्पुरुष तथा इसके बाद द्विगुसंज्ञा का विधान करते हैं, जबकि कातन्त्रकार 'कर्मधारय-द्विगु' संज्ञाएँ पहले प्रस्तुत करके उन दोनों की तत्पुरुष संज्ञा का निर्देश बाद में करते हैं ।

**पूर्वाचार्यों द्वारा व्यवहृत द्विगु संज्ञा**

**बृहद्देवता**— द्विगुर्द्वन्द्वोऽव्ययीभावः कर्मधारय एव च ।
पञ्चमस्तु बहुव्रीहिः षष्ठस्तत्पुरुषः स्मृतः ।। (२/१०५) ।

**नाट्यशास्त्र**— तत्पुरुषादिकसंज्ञैर्निर्दिष्टः षड्विधः सोऽपि ।। (१४/३२) ।

**काशकृत्स्नधातुव्याख्यान**—प्रत्ययोत्तरपदयोः (सू० ३) ।
(यु० मी० व्या०-स च द्विगुसंज्ञो भवति)

### अर्वाचीन व्याकरणों में द्विगुसंज्ञा का व्यवहार

**जैनेन्द्रव्याकरण**—संख्यादी रश्च (१/३/४७)।

**शाकटायनव्याकरण**—विशेषणं व्यभिचार्येकार्थे कर्मधारयश्च (२/१/५८)।

**हैमशब्दानुशासन**—संख्यासमाहारे च द्विगुश्चानाम्न्ययम्।

**मुग्धबोधव्याकरण**—भिन्नान्येकार्थद्वयापि संख्याव्ययादीनां च - ह - य - ष - ग - वाः (सू० ३१८)।

**शब्दशक्तिप्रकाशिका**—संख्याशब्दयुतं नाम तदलक्ष्यार्थबोधकम्।
अभेदेनैव यत् स्वार्थे स द्विगुस्त्रिविधो मतः ॥ (कारिका ३५)।

**अग्निपुराण**— द्विगुराभाषितो द्विधा (३५४/१५)।

**नारदपुराण**— पञ्चगवं दशग्रामी त्रिफलेति तु रूढितः (५२/९२)।

सङ्गीतशास्त्रीय द्विगुसंज्ञा में सङ्ख्यावाचक के उल्लेख से व्याकरणशास्त्रीय संज्ञा के साथ कुछ सादृश्य सिद्ध होता है।

## १०१. कलापे तत्पुरुषसञ्ज्ञा

**विभक्तयो द्वितीयाद्या नाम्ना परपदेन तु।**
**समस्यन्ते समासो हि ज्ञेयस्तत्पुरुषः स च ॥** (२/५/८)।

*(दुर्गवृत्तिः)*

यत्र समासे इति सम्बन्धः। यथा–'कष्टं श्रितः कष्टश्रितः। एवं 'नरकपतितः, ग्रामगतः' इत्यादि [ **पाठा० –द्वितीया**-एवं कान्तारातीतः, तरङ्गात्यस्तः, सुखप्राप्तः, दुःखापन्नः, ग्रामगमी, ग्रामागामी, ओदनबुभुक्षुः, खट्वारूढो जाल्मः। अह रतिसृता मुहूर्ताः, अहःसंक्रान्ताः, रात्र्यारूढाः। मासप्रमितश्चन्द्रमाः, मुहूर्तसुखम्, सर्वरात्रकल्याणी। क्वचिद् वाक्यमेव–ओदनं भुक्तवान्।

**तृतीया**

गिरिणा काणः गिरिकाणः। एवं धान्यार्थः, मासपूर्वः, पितृसदृशः, पितृसमः, मासोनः, मासविकलः, असिकलहः। वाङ्निपुणः, गुडमिश्रः, वाक्श्लक्ष्णः, तथा राजहतः, नखनिर्भिन्नः, काकपेया नदी, बाष्पच्छेद्यानि तृणानि। क्वचिन्न स्यात्। काकेन पातव्या। क्वचित् स्यात्–बुषोपेन्ध्यम्, घनघात्यम्, दध्ना उपसिक्त ओदनः, गुडेन मिश्रा धाना गुडधानाः।

**चतुर्थी**

गोभ्यो हितं गोहितम्। एवं गोसुखम्, कुबेरबलिः, गोरक्षितः। यूपाय दारु यूपदारु, देवदेयं पुष्पम्, ब्राह्मणदेयं धनम्, वरप्रदेया कन्या। क्वचिन्न स्यात्–

ब्राह्मणाय दातव्यम्, ब्राह्मणार्थः पूपः, ब्राह्मणार्था प्रपा, ब्राह्मणार्थं पयः। नित्यसमासः सर्वलिङ्गता च।

**पञ्चमी**

वृकाद् भयं वृकभयम्। एवं वृकभीतः, वृकभीतिः, वृकभीः, ग्रामनिर्गतः, सुखापेतः, कल्पनापोढः, चक्रमुक्तः, मञ्चपतितः, तरङ्गापत्रस्तः।

**षष्ठी**

राज्ञः पुरुषो राजपुरुषः। एवम् आत्मषष्ठः, भिक्षाद्वितीयः, वर्तमानसामीप्यम्, चन्दनगन्धः, नदीघोषः, कन्यारूपम्, स्तनस्पर्शः, फलरसः, ब्राह्मणस्य कर्तव्यम्। वृत्तिरपीष्यते। ब्राह्मणस्य कुर्वन्, ब्राह्मणस्य कुर्वाणो वाक्यमेव, तथा फलानां तृप्तः, छात्रस्योच्चैर्गृहमिति सापेक्षत्वात्। 'पलाशशातनम्, मातृस्मरणम्, सुरेश्वरः, राजपूजितः' इत्यादिषु सम्बन्धषष्ठ्या समास एव।

**सप्तमी**

अक्षेषु शौण्डः अक्षशौण्डः। एवम् अक्षधूर्तः, अक्षकितवः। वनेऽन्तर्वसतिर्वनान्तर्वसतिः। तथा काम्पिल्लसिद्धः, छायाशुष्कः, कुम्भीपक्वः, चारकबन्धः, तीर्थध्वाङ्क्षः, तीर्थकाकः। तथा पूर्वाह्णेगेयं साम, मासदेयम् ऋणम्, पूर्वाह्णकृतम्, अपराह्णकृतम्, पूर्वरात्रकृतम्, अपररात्रकृतम्। एवमन्येऽपि।

परपदेनेति किम्? गतो ग्रामम्। कथं प्राप्तो जीविकां प्राप्तजीविकः? एवम् आपन्नजीविकः? अत्यादयः क्रान्ताद्यर्थे द्वितीयया–अतिक्रान्तः खट्वाम् अतिखट्वः? अवादयः क्रुष्टाद्यर्थे तृतीयया-अवक्रुष्टं कोकिलया अवकोकिलं वनम्? एवम् अवमयूरम्। पर्यादयो ग्लानाद्यर्थे चतुर्थ्या–परिग्लानोऽध्ययनाय पर्यध्ययनः? निरादयो गताद्यर्थे पञ्चम्या–निर्गतः कौशाम्ब्या निष्कौशाम्बिः? सत्यम्। कृते समासे पूर्वनिपातः, अभिधानात्। यथा दन्तानां राजा राजदन्तः इति। 'कुब्राह्मणः' इत्यादीनां कर्मधारयः]।

## [हिन्दी-अनुवाद] कलापव्याकरण में तत्पुरुष संज्ञा

जिस समास में नाम पद के साथ द्वितीया आदि विभक्तियों का समास होता है, उसे तत्पुरुष समास कहते हैं। जैसे–कष्ट के आश्रित रहने वाला पुरुष-कष्टश्रितः। इसी प्रकार से नरक में पतित-'नरकपतितः' तथा ग्राम में गया हुआ पुरुष-ग्रामगतः इत्यादि।

## १०१. गान्धर्वे तत्पुरुषसञ्ज्ञा

**प्राग् द्वितीयादिमात्रा-युक्तानि परपदैनैकस्थेन समासो हि ज्ञेयस्तत्पुरुषः स च**

(२/४/७)।

प्राक् पूर्वपदानि द्वितीयादिमात्रायुक्तानि चेदेकस्थेन एकमात्रायुक्तेन परपदेन सह समासो हि तत्पुरुषो ज्ञेयः ।

## [ हिन्दी-अनुवाद ] सङ्गीतशास्त्र में तत्पुरुष संज्ञा

द्वितीयादिमात्रा से युक्त पूर्वपद का एकमात्रा से युक्त दूसरे पद के साथ जो समास होता है, उसे तत्पुरुष समास कहते हैं ।

## टिप्पणी-७२

पाणिनि ने तत्पुरुषसंज्ञा तथा विधि-सूत्रों के लिये पर्याप्त विस्तार का आश्रय लिया है । सूत्र "तत्पुरुषः" (२/१/२२) से लेकर सूत्र "क्त्वा च" (२/२/२२) तक ७३ सूत्रों में यह विस्तार द्रष्टव्य है । कातन्त्रकार शर्ववर्मा ने लोकाभिधान के आश्रय से एक ही सूत्र बनाकर संक्षिप्त मार्ग का आश्रय लिया है । उनके अभिप्राय को व्याख्याकारों ने स्पष्ट किया है और पाणिनि के सूत्रों की अनावश्यकता सिद्ध की है ।

**पूर्वाचार्यों द्वारा व्यवहृत तत्पुरुषसंज्ञाविषयक वचन**

**बृहद्देवता**—द्विगुर्द्वन्द्वोऽव्ययीभावः कर्मधारय एव च ।

पञ्चमस्तु बहुव्रीहिः **षष्ठस्तत्पुरुषः स्मृतः** ।। (२/१०५) ।

**नाट्यशास्त्र**—तत्पुरुषादिकसंज्ञैर्निर्दिष्टः षड्विधः सोऽपि (१४/३२) ।

**निरुक्त**—तद्धितसमासेष्वेकपर्वसु चानेकपर्वसु च पूर्वं पूर्वमपरमपरं प्रविभज्य निर्ब्रूयात् (२/१) ।

**अर्वाचीन आचार्यों के वचन**

**जैनेन्द्रव्याकरण**—षम् (१/३/१९) ।

**शाकटायनव्याकरण**—ति-दुस-स्वत्याङ्क्वन्यस्तत्पुरुषः (२/१/२०) ।

**हैमशब्दानुशासन**—गतिक्वन्यस्तत्पुरुषः (३/१/४२) ।

**मुग्धबोधव्याकरण**—भिन्नान्येकार्थद्वयापि संख्याव्ययादीनां च - ह - य - ष - ग - वाः (सू० ३१८) ।

**अग्निपुराण**—स्यादष्टधा तत्पुरुषः, उत्तरपदार्थमुख्यः (३५४ /३, १८) ।

**नारदपुराण**—रामाश्रितस्तत्पुरुषे धान्यार्थो यूपदारु च ।

व्याघ्रभी राजपुरुषोऽक्षशौण्डः ।। (५२/९१-९२) ।

**शब्दशक्तिप्रकाशिका**—यदीयेन सुबर्थेन युतयद्बोधनक्षमः ।

यः समासस्तस्य तत्र स तत्पुरुष उच्यते ।। (कारिका-३९) ।

